ऽज्ञानभ्रान्त्यादिवर्जिताः ॥ १२४८ ॥ ज्ञानविज्ञानसम्पन्ना महापूरुषसेवया । प्रजायन्ते यदा स्वात्माऽनाविलज्ञप्तिसंभृताः ॥ १२४९ ॥ तदा तद्वासनानाशे शुद्ध्यन्त्येव हि सर्वथा। वार्तेयं हरिणा प्रोक्ता मुक्तभेदवचोमृते ॥ १२५० ॥ जीवमायेश्वराश्चेति त्रयस्तेऽनादिनः सदा । तत्र परेश्वरे सर्वकारणत्वं प्रविद्यते ॥ १२५१ ॥ सर्वकर्तृत्वमेवापि, विद्यते कीदृशे नु ते ? । स्वामी जगाद वै त्रेधा–कारणत्वं परेश्वरे ॥ १२५२ ॥ निमित्तत्वमुपादानत्वं तथा सहकारिता । स्वसंकल्पविशिष्टस्य निमित्तत्वं हरेस्तथा॥ १२५३ ॥ कृत्स्नाऽचिच्चिद्विशिष्टस्योपादानत्वं तदस्य च । कालादिकोपकरणैर्विशिष्टस्य हरेः प्रभोः ॥ १२५४ ॥ सहकारित्वमेवापि वर्तते परमात्मनः । सूक्ष्माऽचिच्चिद्विशिष्टस्योपादानत्वं तदस्य वै ॥ १२५५ ॥ स्थूलाऽचिच्चिद्विशिष्टस्योपादेयत्वं तदस्य वै । कारणत्वं पुराऽवस्था तदूर्ध्वा कार्यतात्मिका ॥ १२५६ ॥ नित्यानामपि सर्वेषामवस्थान्तरयोगिनाम् । कारणत्वं च कार्यत्वं घटतेऽनादिनामपि ॥ १२५७ ॥ स्थूलभावस्थिताञ्जीवान् गुणकार्ययुतांस्तथा । मायां च सूक्ष्मतां प्रापयति श्रीपुरुषोत्तमः ॥ १२५८ ॥ ततो वै कारणं श्रीजीमहाराजोऽस्ति तान्प्रति । मायायां च तथा जीवाद्येषु यद्वर्तते महत् ॥ १२५९ ॥ क्रियाकारकसामर्थ्यं प्रकाशांकुरशक्तयः । इत्याद्यनेकरूपाणि सामर्थ्यानि तु यानि वै ॥ १२६० ॥ सन्ति सर्वाणि पुरुषोत्तमेनाऽभ्यर्पितानि हि । तद्धरौ

---

श्रीपुरुषोत्तममें सर्वकारणपना तथा सर्वकर्तापना कैसा है ? उसका उत्तर स्वामीजीने दिया कि—मायात्मकशरीरसहित प्रभु उपादान कारण है, संकल्पविशिष्टप्रभु निमित्तकारण है और कालादिशक्तिविशिष्टप्रभु सहकारी कारण है, कारणरूप प्रभु स्वशरीरको स्थूलता प्राप्त कराते हैं अतः कर्तापना व कार्यपना भी प्रभु में ही हैं, भगवान् मायाको तथा जीवोंको सूक्ष्मभाव भी

सर्वकर्तृत्वं सर्वेषां च नियन्तृता ॥ १२६१ ॥ सर्वेषां कारणत्वं च वर्तते श्रुतिवर्णितम् । 'यतो वेमानि भूतानि जायन्ते च ततोऽपि ते ॥ १२६२ ॥ जीवन्त्यन्तेऽभिसंयान्ति चास्मिन्नेव स वै प्रभुः' ॥ [१६३] ॥ अथाऽविद्या च विद्या च प्रोक्ते बन्धनमोक्षदे ॥ १२६३ ॥ 'विद्याऽविद्ये मम तनू विद्ध्युद्धव शरीरिणाम् । मोक्षबन्धकरी त्वाद्ये मायया मे विनिर्मिते' ॥ १२६४ ॥ इतिश्लोकेन गदिते ताभ्यां वै बन्धमोक्षणे । सा विद्या किंस्वरूपा चाऽविद्याऽपि किंस्वरूपिणी ? ॥ १२६५ ॥ स्वामी तत्रोत्तरं प्राह—विद्या-ज्ञानादि मोक्षदम् । परमोक्षप्रदा विद्या सा त्वनेकस्वरूपिणी ॥ १२६६ ॥ विद्या भागवतो धर्मो, धर्मे तद्वत् प्रवर्तनम् । ज्ञानं ब्रह्मात्मभावस्य विद्या, वैराग्यरक्षणम् ॥ १२६७ ॥ वेदनीयं च माहात्म्यं श्रीहरेश्च सतामपि । विद्या सेयं च नवधा भक्तिर्विद्येति वै हरेः ॥ १२६८ ॥ साधनानि दमशान्त्यादीनि विद्यात्मकानि च । सतां सेवा च सत्संगस्तानि विद्यात्मकानि वै ॥ १२६९ ॥

---

प्राप्त करा देते हैं, और स्थूलताके लिये क्रिया करनेका सामर्थ्य व प्रकाशपना आदि अनेक सामर्थ्य श्रीपुरुषोत्तम ही देते हैं, अतः श्रीहरिजीमें सर्वकर्तापना व सर्वनियन्तापना तथा सर्वकारणपना है ॥ [१६३] ॥ हे उद्धवजी ! शरीरीयोंमें मेरे शरीर रूप अविद्या व विद्या रहीं हैं, वे अनादिसे बन्धन भी करती आयी हैं तथा मोक्ष भी देती रहती हैं, मैंने मेरी मायासे दोनों रची हैं, इनमें बन्ध मोक्ष करने वाली अविद्या व विद्या किंस्वरूपा समझनी चाहिए ? इसका उत्तर स्वामीजीने दिया कि—विद्या माने मोक्षप्रद ज्ञान धर्मवर्तन वैराग्य तथा श्रीजीमहाराज व बडे सन्तकी महिमा और भक्ति करना व शमदमादि साधन सीखना इत्यादि सब विद्याशक्तियाँ कहाती हैं, और पंचविषयोंमें राग रखना देहाभिमानसहित वर्तना तथा व्यवहार ज्ञान कर्म आदि सभी बन्धनकारी अविद्याएँ कही

धामाऽक्षरं यथा चाधिगम्यते च तथा हरिः । सा विद्या मोक्षदात्रीति विद्याशक्तिस्तदर्पिता ॥ १२७० ॥ अविद्या तु विषयेषु रागकर्त्री हि वासना । देहाभिमानकर्त्री च भजने रोधकारिणी ॥ १२७१ ॥ भगवच्छून्यकर्माणि भ्रान्तयश्च तथा, मता । अविद्या बहुरूपा सा मायापुष्टिविधायिनी ॥ १२७२ ॥ शक्तिर्बन्धनरूपा सा वर्तते सर्वदेहिषु । अविद्यायां च या विद्या साऽप्यविद्याऽस्ति सर्वथा ॥ १२७३ ॥ अविद्या द्विविधा चास्ति केवला मिश्रिताऽपि च । अज्ञानिजीवमात्रेषु केवला सर्वशाखिनी ॥ १२७४ ॥ ऐश्वर्यार्थिषु सम्मिश्रा वर्तते विद्यया सह । यावदज्ञानिलोकेषु विद्याभासा भवन्ति हि ॥ १२७५ ॥ विद्यानामधरास्ते तु यज्ञो दानं व्रतानि च । तीर्थं वेदाध्ययनं च पुण्यं सर्वाः शुभक्रियाः ॥ १२७६ ॥ प्रवृत्तयः समस्तास्तु फलप्राप्तिसमीच्छया । क्रियन्तेऽतो भवन्त्येता विद्याभासा अवित्तयः ॥ १२७७ ॥ ऐश्वर्यार्थिषु विज्ञानं विवेको वर्ततेऽपि च । सा विद्याऽपि भवत्येवाऽविद्यामिश्रा जनिप्रदा ॥ १२७८ ॥ सर्वैश्वर्यार्थिनो भक्ताः सकामाः फललालसाः । सनकाद्यास्तथा योगाभ्यासिनश्चेश्वरा अपि ॥ १२७९ ॥ प्रधान-

---

गयी हैं, और अविद्यामें जो विद्या मालूम होती है तो वह भी अविद्याही है, अविद्याके दो प्रकार हैं फलवाली व निष्फल, ये दोनों अज्ञानी जीवमात्रमें तथा ऐश्वर्यार्थीमात्रमें रही हैं अज्ञानीकी अविद्या माने यज्ञ दान पुण्य वेदाध्ययन तीर्थ व्रत आदि सभी शुभक्रियाएँ फलप्राप्तिकी इच्छासे की जाती हैं अतः ये विद्याएँ भी अविद्याएँ हैं और ऐश्वर्यार्थी में जो विद्याएँ हैं वे भी अविद्याएँ हैं क्योंकि ये सकाम ऐश्वर्यार्थीमें रही हैं, ऐसे सकाम ऐश्वर्यार्थी तो सनकादिकोंसे लेकर प्रधानपुरुषपर्यन्त होते हैं, अतः जिस भक्तकी इन्द्रियोंकी वृत्तियाँ आत्मा या परमात्माके सन्मुख वर्तती हैं तथा विषयोंमें तो दोषध्यानवाली बर्तती हैं वह भक्त

पुरुषाद्याश्च सकामाः सर्वं एव ते । कर्मनद्धा भोगफला अतश्चा-विद्यका हि ते ॥ १२८० ॥ तेषां लोकर्द्धयो भोगैश्वर्यसम्पत्तयोऽपि च । अविद्यास्ताः समस्ता वै किन्त्वात्मज्ञानमिश्रिताः ॥ १२८१ ॥ भगवद्भक्तिमिश्राण्यैश्वर्याण्येषां भवन्ति हि । मायिकानीति तान्येषामविद्यात्मानि सन्ति हि ॥ १२८२ ॥ अथ मुक्तजनस्येव यस्य भक्तस्य वृत्तयः । इन्द्रियाऽन्तःकरणानामात्मनि परमात्मनि ॥ १२८३ ॥ लग्ना नद्धाः सम्मुखाश्च वर्तन्ते, न तु मायिके । कस्मिंश्चिद्विषये चापि पदार्थे त्रिगुणात्मके ॥ १२८४ ॥ किन्तु दोषानुसन्धानाद्धेयतानिर्णयात् सदा । प्राप्तिलौम्येन वर्तन्ते निवृत्तिस्थितिमाश्रिताः ॥ १२८५ ॥ परात्मस्वात्मविषया मोक्ष-मात्राभिगोचराः । परब्रह्माधिविषयास्ता विद्याशक्तयः खलु ॥ १२८६ ॥ ताभिर्युक्तस्तु भक्तो वै विद्याशक्तियुगुच्यते । अथ यस्य तु भक्तस्येन्द्रियादीनां हि वृत्तयः ॥ १२८७ ॥ बाह्यभावेषु वर्तन्ते विषयेषु गुणेषु च । मायागुणाभिसन्धानव्याप्ता आविद्यकास्तु ताः ॥ १२८८ ॥ तद्युक्तः कथ्यते भक्तस्त्वविद्याशक्तियुग् गुणी । अथ ये नैव जानन्ति तद्विधां भक्तमानवाः ॥ १२८९ ॥ निश्चयस्य महिम्नश्च बलं त्वाश्रित्य वै निजान् । नाशयन्ति स्वभावान्न तादृशाः सन्ति चालसाः ॥ १२९० ॥ अथाऽपरे हरेर्भक्ताः श्रीहरे-

---

विद्याशक्तियुक्त कहाता है, और जिस भक्तकी इन्द्रियोंकी वृत्तियाँ बाहर वर्तती हैं तथा विषयोंमें गुणध्यानसहित वर्तती हैं वह भक्त अविद्याशक्तियुक्त कहाता है; और जो हरिभक्त ऐसे नहीं समझते हैं तथा निश्चय या महिमाका बल लेके स्वभावोंको मिटाता नहीं हैं, तथा जो हरिभक्त श्रीजीमहाराजका और सत्पु-षका भय रखके भगवान्को अन्तर्यामी जानके स्वभावप्रकृतिको मिटाता है, इन दोनोंको आखिरमें फलमें बहुत फरक पड़ जाता है, अभी तो समान दिखते हैं मगर जैसे दो जहाज समुद्रमें

स्तत्सतामपि । आम्नायं च भयं ज्ञात्वा ज्ञात्वाऽन्तर्यामिणं हरिम् ॥ १२९१ ॥ स्वभावान्नाशयन्त्येव सावधाना हि सन्ति ते । तयोश्चोभयविधयोर्विद्यते तु फलागमे ॥ १२९२ ॥ विषमं तारतम्यं वै बहुभेदं तु लाभकृत् । यद्यपि त्वधुना तौ द्वौ ज्ञायेते सदृशाविव ॥ १२९३ ॥ तथापि द्वे यथा नौके समुद्रे वै समस्थलात् । प्रयाते भवतस्तत्र तयोःसकृत् सुकर्णयोः ॥ १२९४ ॥ विमोडनेन चाल्पेन दीर्घमार्गातिलंघने । जातेऽग्रे द्विशतक्रोशविप्रकर्षः प्रजायते ॥ १२९५ ॥ एवं स्वभावनाशार्थं यत्नाऽयत्नकृतोर्महत् । तारतम्यं फले चाति जायते बहु सर्वथा ॥ १२९६ ॥ यथा केवलया विद्या-शक्त्या युक्तास्तु सर्वथा । श्वेतद्वीपस्य मुक्ताश्च बद्रिकाश्रमगास्तथा ॥ १२९७ ॥ वर्तन्ते त्वेव भगवन्निष्ठसर्वस्ववृत्तयः । कर्तृकर्मफलसंगा-ऽऽसक्तिसंशून्यवर्तनाः ॥ १२९८ ॥ यद्येषां वै क्वचिद् दुष्टदेश-कालादियोगिता । पञ्चविषयसाम्मुख्यं भवेद्वा गुणचिन्तनम् ॥ १२९९ ॥ तदा तत्रापि तेषां वै विद्यायां खलु मिश्रणम् । अविद्यायाः प्रजातं तद् गीयते नाऽन्यथा क्वचित् ॥ १३०० ॥ अथ मुक्ता गुणातीता वर्तन्तेऽक्षरधामगाः । अतस्ते निर्गुणाः सन्ति निर्गुणश्रीहरिश्रयात् ॥ १३०१ ॥ इमां वार्तां तु यः सम्यग् यथार्थां

---

जा रहे हों उनके सुकानको जरासा मरोड़ने पर आगे दूर जानेसे सौ दो सौ कोशोंका अन्तर हो जाता है, वैसे जो स्वभाव मिटाता हो और न मिटाता हो उनमें भी आखिरमें फरक पड़ जाता है, और केवल विद्याशक्तिसे युक्त तो श्वेत-द्वीपके तथा बद्रिकाश्रमके मुक्त वर्तते हैं, वे कर्तृत्व कर्म व फलके संगमें आसक्ति रहित बर्तते हैं, किन्तु कभी इन्हीं मुक्तोंको देशकालादिके वैषम्यसे पंचविषय के सन्मुखपना या गुणानुध्यान हो जावे तब उन में भी उतनी विद्या में अविद्या कहाती है, और अक्षरधाम के मुक्त तो गुणातीत बर्तते हैं, अतः

ज्ञातवानिह । श्रुत्या च मननेनापि निदिध्यासेन वै मुहुः ॥ १३०२ ॥ सः प्राप्तोऽप्यल्पसंख्येभ्यो दिनेभ्यो हरिभक्तताम् । तथापि सद्विवेकाढ्यः स जानाति यथार्थतः ॥ १३०३ ॥ संगं चापि कुसंगं च ततस्तत्र न सज्जते ॥ १६४ ॥ अथ किंविधविज्ञानिमर्त्यस्य हृदये क्वचित् ॥ १३०४ ॥ नाऽऽविशेच्छंकराचार्यसमस्यापि तु वार्तिका । निराकारादिबोधाढ्या तद्गन्धोऽपि च नाऽऽविशेत् ? ॥ १३०५ ॥ स्वामी चास्योत्तरं प्राह—विजानाति य ईदृशम् । तस्य तद्वार्तिकागन्धः स्पृशेन्नैव कदाचन ॥ १३०६ ॥ तद् यथा—भगवद्व्यासग्रन्थान् साकारबोधकान् । वाचयेत् सततं, सर्वश्रुतिस्मृत्यादिवर्णितान् ॥ १३०७ ॥ साकारान् परमेशादींस्तद्धामादितदालयान् । गोलोकं चापि वैकुण्ठं ब्रह्मधाम तथाऽमृतम् ॥ १३०८ ॥ एवं धामालयान् दिव्याँस्तथा तत्पार्षदानपि । नन्दसुनन्दकुमुदप्रभृतीन् दिव्यविग्रहान् ॥ १३०९ ॥ लक्ष्मीराधादिदिव्यस्वशक्तीश्चैवं हि सर्वथा । साकृतीरेव जानाति श्रुतिस्मृत्यादिवर्णिताः ॥ १३१० ॥ यस्तस्य न स्पृशेद्गन्धो निराकारत्ववाङ्मयः । सन्ति वै श्रुतयश्चापि स्मृतयश्च सहस्रशः ॥ १३११ ॥ निरूपयित्र्यः साकार-

---

वे तो निर्गुण ही कहाते हैं, और जो इस बात को श्रवण मनन व निदिध्यासन करके यथार्थ समझा हो वह यदि थोड़ दिन से ही हरिभक्त हुआ हो तो भी वह संग कुसंग को पहचानने लगता है इससे वह उसमें फँसता नहीं है ॥ १६४ ॥ और कैसे समझे तो शंकर स्वामी समान भी निराकार की बात करे तो भी उसका अंश अन्तःकरण में पैठे ही नहीं ?, तब स्वामी जी ने कहा—जो इस प्रकार समझे उसे उस बात का गन्ध छूए ही नहीं, श्रुति स्मृतियों में परमेश्वर तथा परमेश्वर के गोलोक वैकुण्ठ व ब्रह्मपुरादि दिव्यधाम तथा नन्द सुनन्द आदि दिव्य पार्षद तथा लक्ष्मीजी राधिकाजी आदि दिव्य शक्तियाँ तथा भक्त मुक्त ये

श्रीहरिश्चयादिधामिनाम् । 'यश्च नित्योऽस्ति नित्यानां चेतनानां च चेतनः ॥ १३१२ ॥ एको यश्च बहूनां स कामान् संपूरयत्यपि' । 'स ऐक्षत बहु स्यां च' 'वीक्षां चक्रे स वै' तथा ॥ १३१३ ॥ 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' । 'हिरण्यवर्णः स हिरण्यकेशः सर्वः सुवर्णो नखश्मश्रुशाली' ॥ १३१४ ॥ 'अस्याऽक्षीणि पुण्डरीककप्यासमन्निभानि च' । दिव्यो देवो राजते पूरुषविधः स सर्वदा' ॥ १३१५ ॥ 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि' । 'स वेत्ति युगपत् सर्वं प्रत्यक्षेण सदा स्वतः' ॥ १३१६ ॥ 'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम्' ॥ १३१७ ॥ 'जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः' । 'न मे पार्थाऽस्ति कर्तव्यं त्रिषु लोकेषु किञ्चन' ॥ १३१८ ॥ इत्याद्यनेकवचनैः सर्वेषां निश्चयो दृढः । साकारत्वस्य विहितो येन स्याच्च तथाऽधिकम् ॥ १३१९ ॥ शुद्धेन सम्प्रदायेन सत्पुरुषेभ्य आश्रुतम् । अध्यात्म-

---

सभी साकार कहे हैं, उनके साकारपने का निरूपण करने वाली हजारन श्रुतियाँ व स्मृतियाँ हैं जैसे कि ये प्रभु अनेक नित्य चेतनों में एक नित्य चेतन हैं वे ही एक सभी के मनोरथ पूरते हैं, उन्होंने बहुत प्रजा रूप होना चाहा, उन्होंने वीक्षण किया, वे मायिक हाथ पाँव आँख कान रहित हैं मगर दिव्यमूर्ति को ग्रहण करते हैं चलते हैं देखते हैं सुनते हैं, हिरण्यसमान वर्णवाले हैं हिरण्यकेश नख दाढी मोछ सभी सुवर्णसम हैं कमलदलवत् नेत्र हैं, दिव्य पुरुष एक ही तत्त्व हैं, उनसे ही सभी पलकवाले प्रकट हुए हैं, वे सभी को एक ही क्षण में जानते हैं, प्रत्यक्षदर्शी हैं, जब अधर्म बढता है धर्म की ग्लानि होती है तब अवतार लेते हैं, उनके प्रकटभाव कर्मभाव तिरोभाव सभी दिव्य हैं, ऐसी दिव्यता व साकारता प्रभु में तथा प्रभु के

ज्ञानमनिशं येन स्यात् तस्य देहिनः, ॥ १३२० ॥ निराकारादिभावस्य प्रतीतिः स्वप्नकेऽपि न। भवेदेवेति, योऽत्र स्यादत्यसत्सम्प्रदायगात् ॥ १३२१ ॥ असतः पुरुषाल्लब्धज्ञानस्तस्य तु जायते। निराकारादिभावस्य प्रतीतिर्नोऽत्र संशयः ॥ १३२२ ॥ अतोऽत्र हेतुः सदसद्विवेकस्य सदा मतः। शुभाऽशुभप्रसंगांऽगी सदसत्पुरुषात्मकः ॥ [१६५] ॥ १३२३ ॥ कीदृग्ज्ञानवतो न स्यात् सतांचावऽगुणः क्वचित्? स्वामी तदुत्तरं प्राह—यस्य संवर्ततेऽनिशम ॥ १३२४ ॥ आन्तरं चानुसन्धानं सतां ध्येयं दृढं प्रति। सतामवगुणस्तस्य नोद्भवेद्धि कदाचन ॥ १३२५ ॥ सतां ध्येयं त्विदं नित्यं—महत्पुरुषवर्तनम्। वर्तते परलोकार्थं न देहार्थं कदाचन ॥ १३२६ ॥ नो यशोऽर्थं न चाप्यैहिकाद्यानन्दार्थमित्यपि। ध्येयमेवं सतां संगिनोऽपि वै पारलौकिकम् ॥ १३२७ ॥ श्रेयः परं भवेदेवंविधमिष्टं न चेतरत्। भक्तं प्रवर्तयत्येवंविधे श्रेयसि सोऽपि वै ॥ १३२८ ॥ वार्तयत्यप्यजस्रं च—लोकस्याऽस्य सुखानि तु।

---

मुक्तकोंमें हैं"। ऐसे अनेक वचनों से सभी के साकारपनेका दृढ ठराव कर रखा हो तथा शुद्ध सम्प्रदायवाले सत्पुरुष से अध्यात्मज्ञानार्थ श्रवण किया हो तो निराकारपना की प्रतीति स्वप्न में भी होवे नहीं, यदि असत् संप्रदाय के असत्पुरुष से ज्ञान लिया हो तो निराकारपने की प्रतीति हो जाती है, अतः सत् असत् विवेक का कारण तो सत् असत् पुरुष ही है ॥ [१६५] ॥ और कैसे समझे तो सत्पुरुष का अवगुन न आवे? तब स्वामी जी ने कहा कि—जिसको निज दिव्य ठराव के सामने दृष्टि हो उसे उनका अवगुण कभी नहीं आता है। ठराव ऐसे समझ रखना व करना,—जो जो महान् पुरुष होते हैं उनका वर्तन तो मोक्ष आदि परलोक के लिये व अन्य के कल्याण के लिये होते हैं, पन अपने शरीरकी आबरुके लिये या यहींके सुखके लिये नहीं

चतुर्भिः प्रलयैः सन्ति विनाश्यानि हि सर्वथा ॥ १३२९ ॥ दुःखान्वितानि बहुधा स्वप्नतुल्यानि सन्त्यपि । एवंविधाभियुक्त्याद्यैरुपदेशं करोति सः ॥ १३३० ॥ सन्त एवाऽऽशु छिन्दन्ति मनोऽन्यासंगमुक्तिभिः ॥ १६ ॥ भासते निर्बला लोभकामादीच्छा मनागपि ॥ १३३१ ॥ एधमाना तु सा तूर्णं समाकृष्य हि देहिनम् । मुम्बापुरीं च काशीं चाऽरबस्थानं नयत्यपि ॥ १३३२ ॥ एवं चानेकविषयाऽभिधदेशान्नयत्यपि । तेषु देशेषु दुःखानां भोगान्साकारयत्यपि ॥ १३३३ ॥ किन्तु जीवो महामूर्खोऽज्ञान्यासक्तियुतोऽस्ति च । संसारेऽतोऽस्य दुःखं तज्ज्ञायते न न भासते ॥ १३३४ ॥ किन्तु लोभादिजन्या सा वासना त्वायता ह्यति । वर्तते तद्विनाशार्थं कुर्यात् साधुसमागमम् ॥ १३३५ ॥ समागमेन धर्मस्य ज्ञानादेश्चाप्यतिदृढम् । पादं कुर्यात्तथा धर्माद्याप्तये शूरवीरताम् ॥ १३१६ ॥ पुरस्कृत्य प्रयतेत–देहं प्रपातयामि वा । अर्थं संसाधयाम्येवं कुर्यात् सा लीयते तदा

---

होते हैं, तथा उनके संगवालेका परलोकमें कैसे भला हो ऐसेही इच्छा रखके वैसेही उन्हें वर्ताते हैं, और इस लोकके सुखोंका तो चार प्रकारके प्रलयद्वारा नाश होना तथा दुःखभरापना तथा स्वप्नतुल्यपना इत्यादिकी अनन्तयुक्ति द्वारा वार्ता भी करते हैं, यही कहा है कि—सन्त जन ही उपदेश द्वारा मनकी आसक्ति काट डालते हैं, और लोभ कामादिकी इच्छा अल्पसरीखी भी रह गई तो वह बम्बई काशी अरबस्तान इत्यादि अनेक देशमें ले जाती है, तथा उन देशोंमें अति दुःख भोगवाती है, किन्तु यह जीव ऐसा मूर्ख अज्ञानी व संसारमें आसक्त है कि उस दुःखको गीनता मानता नहीं है, परन्तु लोभादिकी वासना तो बड़ी भारी है, उसे मिटानेके लिये सन्तपुरुषके संगद्वारा धर्म ज्ञानादि गुणोंमें अपना पाँव अति दृढ पक्का कर लेना, तथा

॥ १३३७ ॥ अत्र वार्ता तु वै बह्वी हिरण्यकशिपोरति । द्वेषद्वाराऽभवत् सिद्धिरेवं दृष्टान्ततः कृता ॥ [१६७] ॥ १३३८ ॥ धर्मज्ञानविरागादिपक्वभावोत्तरं द्रुतम् । मायिकानां विषयाणामिच्छा चातिन्निवर्तते ॥ १३३९ ॥ निरीहस्य ततः स्वर्णं कचरं च समं भवेत् । यतो विज्ञानिभक्तस्यताभ्यांनास्ति प्रयोजनम् ॥ १३४० ॥ ततः स्वर्णमले तुल्ये प्रज्ञायेतेऽस्य सर्वथा । तिष्ठेते सुखदुःखे तु जीवस्याऽज्ञानपेटके ॥ १३४१ ॥ जीवस्याऽस्य यतः संजायते भानं तु वस्तुनः । 'इदं वस्तु समीचीनं सुखदं, चेदमेव न ॥ १३४२ ॥ सुखदं किन्तु दुःखाढ्यं' त्वेवं स्वस्याऽऽन्तरे दृढा । ग्रन्थिका ज्ञानजा चास्ते तस्यां दुःखसुखे स्थिते ॥ १३४३ ॥ लोके पश्यन्तु सर्वत्र पुत्रोद्वाहार्थमेव ये । यान्ति तत्र तु कन्यायाः पक्षस्था मण्डपे तदा ॥ १३४४ ॥ गालीर्वदन्ति बहुधा, मोचकानां च तैलिनाम् । वर्धकीनां खरीणां च यूयं स्थेति ह्यनेकधा ॥ १३४५ ॥ किन्तु ताः शर्करातुल्या भासन्ते मिष्टगालिकाः । अतो दुखं सुखं चापि तिष्ठेते ज्ञानरूपिणि ॥ १३४६ ॥ कारणे वै, ततः कुर्यात्

---

भागवत धर्मादिकी प्राप्तिके लिये शूरवीर होना व पुरुष प्रयत्न करना सो देहं पातयामि या तो अर्थं साधयामि ऐसे लग पडना तब वासना टलती है, इस पर हिरण्यकशिपुका दृष्टान्त देके और भी वार्ता कहा ॥ [१६७] ॥ और धर्म ज्ञान आदिकी पक्वताद्वारा मायिक विषयोंकी इच्छा मिट जाती है, इससे उन्हें कचरा व कंचन समान हो जाते हैं, क्योंकि उन दोनोंका प्रयोजन ज्ञानी भक्तको नहीं रहता है, अतः वे समान भासते हैं, और जो सुख दुःख हैं वे तो जीवकी समझमें ही रहे हैं, क्योंकि—यह वस्तु तो सुखदायक है और वह वस्तु तो दुःखदायक है ऐसी समझ हृदयमें दृढ गूंथा गई है इसीमें सुख दुःख रहे हैं, देखिए—इस लोकमें कोई पिता निज पुत्रका व्याह करानेको जाते हैं वहाँ उन्हें

स्वान्तरे तु निरन्तरम् । असतश्च सतश्चापि विवेकं, च ततः परम् ॥ १३४७ ॥ एतल्लोकभवे दुःखसुखे कुर्यान्मृषा सुधीः । एवं ज्ञातुर्विनश्येतां बाह्यजे ते मृषात्मके ॥ १६८ ॥ १३४८ ॥ नृसिंहानन्दजीस्वामी तदा पप्रच्छ सद्गुरुम् । आस्तिकः कोऽत्र विज्ञेयः ? स्वामी प्राह तदुत्तरम् ॥ १३४९ ॥ यस्याऽऽनुश्रविको भावः सत्यो वेदे च वैदिके । तथा श्रीजीमहाराजे हरिकृष्णेऽवतारिणि ॥ १३५० ॥ तथा तस्याऽवतारेषु तेषां धामसु सत्यता । सत्यता च तथा तस्यैकान्तिकेषु च साधुषु ॥ १३५१ ॥ सच्छास्त्रेषु समस्तेषु यस्य सत्यत्वभावना । विश्वासश्च यथार्थत्वे, विजानीयात् तमास्तिकम् ॥ १३५२ ॥ भक्तं बुद्धियुतं तं वै जानीयाच्छिष्टमुत्तमम् । आप्तं तमेव जानीयाद्धितकृत्सद्गुरुं च तम् ॥ १६९ ॥ १३५३ ॥ जगच्चेदं पुरा नासीन्नान्ते तत्स्थास्यतीति च । मध्ये मरुमरीचिस्थोदकवद्दृश्यते मृषा ॥१३५४॥ न यदिदमग्र आस न भविष्यदतो निधना-

---

घांचीका चूडे चमारका दरजीका बढ़ईका गधईका आदि गालियाँ अनेक प्रकारकी सुनाते हैं, तो भी गालीयाँको शक्कर मिसरीके समान मिठी मानते हैं, अतः वे सुख दुःख समझ में ही रहे हैं, इस लिये संत् असत्का विवेक करके इस लोकके सुख दुःख को झूठे समझलेने तथा बाहरसे भी वे झूठे करने चाहिए ॥ १६८ ॥ और नृसिंहानन्द स्वामीने पूछा कि—आस्तिक किसको कहना चाहिए ?, तब स्वामीजीने कहा कि—वेद शास्त्र प्रणाली तथा परलोक सत्य मानता हो तथा श्रीहरिकृष्णजीमहाराज व उनके अवतारोंको तथा उनके धाम उनके मुक्त व ऐकान्तिक सन्त् व पुण्यादि सभीको मानता हो तथा उनमें सत्यपनाका विश्वास हो वह आस्तिक भक्त है वैसा समझना ॥ १६९ ॥ और जगत् आदिमें नहीं था और अन्तमें भी नहीं रहेगा, मध्यमें भी मृगतृष्णाका जलकी तरह ही है, क्योंकि जो पहले नहीं ही था, अव्यक्त

दनुमितमन्तरा त्वयि विभाति मृषैकरसे। अत उपमीयते द्रविण-जातिविकल्पपथैर्वितथमनोविलासमृतमित्यवयन्त्यबुधाः ॥१३५५॥ अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत। अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ [१७०] ॥ १३५६ ॥ अथ पृष्टं स्वभावो वै कथं लीयेत ? तत्र च। स्वाम्युत्तरं जगादापि धर्मादिसाधनानि वै ॥ १३५७॥ कर्तव्यान्यतिपक्वानि पुंप्रयत्नेन वै ततः। स्वभावाः संविनश्येयुर्विपरीताः समस्ततः ॥ १३५८ ॥ यथा जीवस्य तानं वै सहजं विषयेषु यत्। लग्नता विषये चापि सहजा वर्तते यथा ॥ १३५९ ॥ तथा लग्नस्य नाशार्थं, नश्यन्त्येव न संशयः। यथा पतिव्रतादीनां पञ्चानां लग्नता निजे ॥ १३६० ॥ नैजे च विषये यद्वत्तद्वद् भक्तौ हरेः सदा। माहात्म्यज्ञानयुक्तायां लग्नता यस्य वर्तते ॥ १३६१ ॥ साध्वीचकोरशलभास्तिमिकालकण्ठकोका निजे-ष्टविषयेषु यथैव लग्नाः। मूर्तौ तथा भगवतोऽतिसुसक्तजन्तोर्नश्यन्ति तीव्रतरमेव निसर्गभावाः १३६२ ॥ यथा कृष्णातिकठिनं खनित्वा प्रस्तरं चिरम्। तत्र नैकविधं शैल्प्यं कर्तुं कालस्य दीर्घता ॥१३६३॥ अपेक्ष्यते, तथा नाशयितुं नैजाभ् स्वभावकान्। ततः पुरुषयत्नेन प्रकृतिर्नश्यति ध्रुवम् ॥ १३६४ ॥ न तत्र द्रुतकारित्वं कर्तव्यं

---

मायामय जगत् मध्यमें व्यक्त हो के फिर अव्यक्त बन जाता है इसमें क्या हर्षशोक करना ॥ [१७०] ॥ और प्रश्न हुआ कि— स्वभाव कैसे मिटे ?, तब स्वामीजीने कहा कि धर्म ज्ञान आदिको पुरुषप्रयत्नद्वारा अति पक्व करे तब स्वभाव मिटे, और जैसे विषयोंमें जीवको सहज लग्नि है, तथा साध्वी पतिव्रताको जैसे निज इष्ट विषय पतिमें, चकोरको चन्द्रमामें, फतींगेको अग्निमें, मत्स्यको खानेमें, मयूरको मेघमें, चकवीको चकवामें, अति लग्नि है, वैसे ही श्रीहरिजी महाराजकी महात्म्यवाली नवधाभक्तिमें लग्नि चाहिये, और जैसे मजबूत काले पत्थरको तोडके उसमें

वै कदाचन । एवं पुरुषयत्नेन विना तु सहजा निजा ॥ १३६५ ॥ प्रकृतिर्न क्षयं प्रैति स्वभावा यन्ति नो लयम् । स्वभावानां विनाशार्थं युक्तिस्तु वचनामृते ॥ १३६६ ॥ उक्ता श्रीहरिणा तां संप्रशिक्ष्यैतत्क्रमेण च । वर्तनस्याऽऽग्रहं कर्तुः स्वभावा यान्ति वै लयम् ॥ [१७१] ॥ १३६७ ॥ अथ पूर्वऽस्य जीवस्य सत्त्वं यच्च रजस्तमः । एतत्त्रिकाद्गुणो मुख्योऽज्ञानकालेऽभवत्तु यः ॥ १३६८ ॥ स एवाऽऽगत्य सत्संगेऽप्यस्य वृद्धिं प्रयाति हि । अतः प्रसेव्य साधून् स्वपुंप्रयत्नेन तं गुणम् ॥ १३६९ ॥ निष्कासयेत्तदा नश्येन्निःसरेद्वाऽन्यथा तु न । एवमज्ञानकालेऽत्र जीवे ये त्वभवन् गुणाः ॥ १३७० ॥ धर्मज्ञानादयो मुख्यास्त एवाऽऽगत्य सर्वथा । सत्संगे वृद्धिमायान्ति, ततो वै महतः सतः ॥ १३७१ ॥ संसेव्य तान् गुणान्निजान् वर्धयेत् तर्हि ते गुणाः । पुष्टिं यान्ति, फलं सत्संगस्याऽनुष्ठानजं हि तत् ॥[१७२] ॥ १३७२ ॥ अथ श्रीस्वामिना प्रोक्तं-वयं

---

भिन्न प्रकारकी रचना करनमें बहुत देर लगती है वैसे स्वभाव मिटानेके लिये पुरुषप्रयत्न करनेमें चटपट नहीं करना, और वैसे पुरुषप्रयत्न किये विना तो सहज प्रकृति नहीं टलती है, उसे टालनेकी युक्ति श्रीजीमहाराजने वचनामृतमें कही है उसे सीखके तदनुसार वर्तनेका आग्रह रखना ॥ [१७१] ॥ और सत्त्व रज व तम इन तीन गुणोंमेंका जो गुण जीवमें अज्ञानकालमें मुख्य वर्तता हो वही गुण सत्संगमें आनेके बाद भी बढ़ता है, अतः सन्तपुरुषकी सेवा करके पुरुषप्रयत्नद्वारा उस गुणको निकाले तभी निकले, नहीं तो नहीं निकलता हैं, और जीवमें अज्ञानकालमें धर्म ज्ञान आदि जो गुण मुख्यपने होते हैं वेही सत्संगमें आनेके बाद बढ़ते हैं, अतः बड़े सन्त पुरुषको सेवके उस गुणको बढावे तो उत्तम होता है वैसी वृद्धि पाना यही सत्संग करनेका फल है ॥ [१७२] ॥ और स्वामीजीने वार्ता कहा कि—हम लोग

समागच्छेत्तस्मै दद्यात्समुत्तमम् । भोजनं शर्करासर्पिःसंभृतं त्वपि तत्खलु ॥ १३८२ ॥ हृदा सद्भावहीनेन श्रद्धया वर्जितेन च । प्रत्युत द्वेषपूर्णेन प्रसह्यैव हि दीयते ॥ १३८३ ॥ तद्वद् विषयभोगेऽपि देहं श्रद्धादिवर्जितः । युञ्ज्यादेवं प्रभोक्ता स्यादभोक्ता बन्धवर्जितः ॥ १३८४ ॥ हृदर्पणेन भोक्ता स्यान्निर्गुणः फलभाङ् न सः ॥ [१७५*] ॥ अथ राजसभावाक्ता बुद्धिर्गुणमयी तु या ॥ १३८५ ॥ मोक्षमार्गे प्रगन्तुं सा शक्ता संभवते न वै । तन्मार्गे तु प्रयात्येव बुद्धिः सत्पुरुषार्पिता ॥ १३८६ ॥ सा तु विश्वाससम्पाद्या सतां वाक्येषु सर्वथा । सर्वार्पणविधानोत्था स्नेहवार्येभिवर्धिता ॥ १३८७ ॥ माहात्म्यमूलजन्या च दिव्यभावाऽभिसंभृता ॥ [१७६*] ॥ अथाऽ-योग्यान् हि संकल्पान् लीनीकर्तुं सुसाधनम् ॥ १३८८ ॥ उक्तं यच्छ्रीमहाराजस्याऽतिमाहात्म्यमन्वहम् । चिन्तयेत् स्वात्मनिष्ठां धारयेच्चातिशयेन वै ॥ १३८९ ॥ वैराग्यं च मुहुः संवर्धयेत् संचिन्तयेद्धृदि । आन्तरेऽपि तु संवेगं तेषामासञ्जयेदति ॥ १३९० ॥ एतावद्भिरुपायैः संनश्यन्त्युत्पथकल्पनाः ॥ [१७७*] ॥ अथ यावत्तु हृदये रुचिः संवर्तते ह्यति ॥ १३९१ ॥ विषयाणां तु पञ्चानां तावत्तु

---

घीवके मिष्टान्न देने पड़ते हैं किन्तु अभावके साथ देते हैं भावसे नहीं, वैसे ही शरीरको अभावसे विषयभोगोंमें प्रवर्तावना ॥ [१७५*] ॥ और रजोगुणी बुद्धि मोक्षमार्गमें टिक सके नहीं, वहाँ तो सत्पुरुषसे मिली हुई बुद्धि काम देती है, सो यह कि—सत्पुरुषके वचनोंमें विश्वास रखना यही मोक्षबुद्धि आखिर तक पहुँचती है ॥ [१७६*] ॥ और अयोग्य संकल्पको मिटानेका उपाय यह कहा है कि—श्रीजीमहाराजकी महिमा तथा आत्मनिष्ठा तथा वैराग्यका अतिशय बार-बार विचार करना व उन्हींका वेग अन्तरमें लगा देना, इन उपायोंसे वे अयोग्य संकल्प मिटते हैं ॥ [१७७*] ॥ और पंच विषयोंकी रुचि अन्तःकरणमें जबतक

हृदये क्वचित्। धर्मज्ञानविरागाद्या गुणा वासं विधाय च ॥ १३९२ ॥ तिष्ठन्त्यन्तःकरणे न, तिष्ठते न हरिस्ततः, । यथा यस्मिँस्तु कूपे वै ह्युपला महती तले ॥ १३९३ ॥ भूगर्भे वर्तते तत्र वारि कोशद्विकोशकम् । नैवाऽभिनिःसरेत्तद्वद्धरिर्नो दोषवद्धृदि ॥ १७८ ॥ १३९४ ॥ रुचिर्यस्य न वै धर्मज्ञानादिषु गुणेषु च । यावत्तावत्तु भक्तः सः सत्संगी नहि कथ्यते ॥ १३९५ ॥ सतां चातः प्रसंगेन कुर्यात्पक्वरुचिं गुणे ॥ १७९ ॥ अथ ये विषयाः श्रेष्ठतमास्ते स्युः कथं ह्यति ॥ १३९६ ॥ कनिष्ठाश्चेति वै प्रश्नोत्तरं स्वामी जगाद यत् । विद्याच्छ्रीजीमहाराजस्याऽत्रमाहात्म्यमुत्तमम् ॥ १३९७ ॥ आत्मनिष्ठां दृढां कुर्याद् दुःखदोषाँश्च चिन्तयेत् । एवं कर्तुर्हि विषया उत्तमा अपि सर्वथा ॥ १३९८ ॥ हरेर्भक्तस्य जायन्ते कनिष्ठा ह्यति सर्वथा ॥ १८० ॥ अथ पृष्टं तु भक्तस्योत्तमस्य मध्यमस्य च ॥ १३९९ ॥ वर्तनं कीदृशं स्याच्चाऽऽचरणं कीदृशं भवेत्। स्वाम्युत्तरं जगादात्रोत्तमो भक्तस्तु ज्ञाग्रति

---

वर्तती है तबतक धर्म ज्ञान आदि गुण अन्तःकरणमें निवास करके रहते नहीं हैं, श्रीजीमहाराज भी नहीं ठहरते हैं, क्योंकि जिस कूआँमें तलमें मोटी चोड़ी शिला पड़ी हो उसमें कोश या दो पुरवटका पाणी निकले नहीं ॥ १७८ ॥ और धर्म ज्ञानादि गुणोंमें जब तक रुचि नहीं है तब तक पक्का सत्संगीपना भी नहीं होता है, अतः सत्पुरुषके संगद्वारा उन गुणोंमें पक्क रुचि करना ॥ १७९ ॥ और उत्तम विषयों को भी अति कनिष्ठपना कैसे हो जाय ?, इस प्रश्नका उत्तर यह है कि एक तो श्रीजीमहाराजकी महिमा अतिशय समझना तथा दूसरी आत्मनिष्ठा अतिशय दृढ़ करना, इनसे वे उत्तम विषय भी भगवान्‌के भक्तके आगे अति कनिष्ठ हो जाते हैं ॥ १८० ॥ और प्रश्न हुआ कि— उत्तम और मध्यम भक्तका बर्तन कैसा होता है ?, तब स्वामीजीने

॥ १४०० ॥ सुषुप्ताविव वर्तेत मध्यमस्तु हि जाग्रति। स्वप्नवत् संप्रवर्तेत भोगेषु विषयादिषु ॥ १६१ ॥ १४०१ ॥ अथ त्रिगुणवेगश्च वेगो विषयजोऽपि च। कथं नश्येदिति प्रश्नोत्तरं स्वामी जगाद यत् ॥ १४०२ ॥ श्रीहरेर्महिमानं यः सर्वोत्कृष्टतया परम्। विदित्वा च स्वयं ज्ञातृवर्यो भूत्वा शनैः शनैः ॥ १४०३ ॥ वेगं विनाशयेत्तर्हि द्वयोर्वेगो विनश्यति। अत्राऽऽञ्जनेयदृष्टांतं प्रोच्याऽऽहातीव वार्तिकाम् ॥ १६२ ॥ १४०४ ॥ अथाऽन्नेनाऽम्बरेणाऽद्भिर्विना यात्रा न वर्ष्मणः। चलत्यन्यैः समस्तैस्तु विना निर्वहते जनः ॥ १४०५ ॥ हरेश्चातः प्रसादस्याऽऽप्तये संसाधयेद्गुणान्। धर्मज्ञानादिकान्, हित्वा प्रमादं प्रयतेत च ॥ १४०६ ॥ अन्नवस्त्रादयो नैजं प्रारब्धमनुसृत्य वै। मिलेयुः सहजा एव नैषामर्थेऽतिचिन्तया ॥१४०७ । देहरूपः स्वयं भूत्वा विस्मरेत्तु हरिं क्वचित् ॥ १६३ ॥ जम्बीरं घृतछुंकारं पुस्तकं चाम्बरं तथा ॥ १४०८ ॥ दृष्टान्तीकृत्य

---

कहा कि—उत्तम भक्तको जागृतमें भी सुषुप्तिकी तरह बर्तता है, और जो मध्यम भक्त हैं वह तो जागृतमें स्वप्नकी तरह विषयोंको भोगता है ॥ १६१ ॥ और तीन गुणोंके वेग तथा विषयोंके वेग कैसे मिटे ?, तब स्वामीजीने कहा—श्रीजीमहाराजकी महिमाको अच्छी तरह समझे व ज्ञानिपनारूप होके धीरे धीरे मिटाने लगे तो दोनोंके वेग मिट जाते हैं, इस पर हनुमानजीके दृष्टान्तसे बहुत वार्ता कहा ॥ १६२ ॥ और अन्न जल व वस्त्र बिना नहीं चलता है, दूसरे भोग्य न हों तो भी चला जाता है, अतः श्रीजीमहाराजको प्रसन्न करनेके लिये धर्म ज्ञान आदि गुण सिद्ध करना, इसके लिये प्रमाद तजकर पुरुषप्रयत्न करना, अन्न जल व वस्त्र तो प्रारब्धानुसार सहज ही मिल जाते हैं, इनके लिये देहरूप होके श्रीजीमहाराजको बिलकुल भूल जाना नहीं ॥ १६३ ॥ और नीबू बघार तथा पुस्तक व वस्त्रके दृष्टान्त देके वार्ता कहा

बहुधा चक्रेऽहंवृत्तिवार्तिकाम् । यथाऽल्पोऽस्ति रसो जम्बीरस्य क्षिप्तस्तु यत्र सः ॥ १४०९ ॥ कृत्स्नवस्तुषु संव्याप्नोत्येवं शाकादिछुंकृतिः । व्याप्नोति सर्वथा शाके यथा चालोक्य पुस्तकम् ॥ १४१० ॥ पृष्ठे पृष्ठेऽक्षिका वृत्तिर्व्याप्नोत्येव यथाऽम्बरम् । वीक्ष्य तन्तौ च तन्तौ च वृत्तिर्व्याप्नोति नेत्रजा ॥ १४११ ॥ एवमान्तरिकी चाऽहंवृत्तिर्देहेऽभितः खलु । व्याप्याऽऽनखशिखं विश्वक् तिष्ठते संसरत्यपि ॥ १८४ ॥ १४१२ ॥ प्रीतिनाशो विषयेभ्यो जायते केन हेतुना ? । अत्रोत्तरं चतुःसंख्यप्रलयानां तु संस्थितिम् ॥ १४१३ ॥ स्पष्टां विज्ञाय देहादौ वैराग्यस्य मतिं चरेत् । माहात्म्यं संविजानीयाच्छ्रीहरेरुत्तमोत्तमम् ॥ १४१४ ॥ एवंविधस्य विषयप्रीतिनाशो भवेदिति ॥ १८५ ॥ अथाऽत्युपशमस्थित्यावासे तु दृश्यतेऽधिकम् ॥ १४१५ ॥ ऐश्वर्यमतुलं चाप्युत्तरोत्तरमपारकम् । आदाविन्द्रादिकैश्वर्यं दृश्यते च ततः परम् ॥ १४१६ ॥ ब्रह्मादीनां ततो वैराजादीनां च ततः परम् । प्रधानपुरुषाद्यानां मूलपूरुषना-

---

कि—अहंकारकी वृत्ति जैसे नीबूका तनिकसा भी रस जिसमें डाले वह सारी चीजमें व्याप्त हो जाता है, छौंकार भी वैसे ही मिल जाता है, वस्त्र व पुस्तकमें भी तारों तारमें व पत्रों पत्रोंमें नेत्र वृत्ति फिर जाती है वैसे अहं वृत्ति भी देहमें नख शिखा पर्यन्त व्याप्त होके रही है ॥ १८४ ॥ और विषयोंमेंसे प्रीति कैसे मिटे ?, इसका जवाब कि—चार प्रकारके प्रलयों की बातें अच्छी तरहसे समझ ले तथा देह आदिमें वैराग्यबुद्धि सदा ही रखा करे तथा श्रीजीमहाराजकी महिमा समझे तो विषयोंमेंसे प्रीति जरूर मिट जावे ॥ १८५ ॥ और उपशमद्वारा तो ऐश्वर्य मालूम पड़ते हैं, सो जैसे जैसे उपशममें रहने लगे वैसे वैसे अधिक ऐश्वर्य दीखने लगे, सो पहले तो इन्द्रादिके ऐश्वर्य दीखते हैं, पीछे ब्रह्मादिके, पीछे वैराजादिके, पीछे प्रधानपुरुषके, और पीछे

मिनाम् ॥ १४१७ ॥ ऐश्वर्याणि विलोक्यन्ते क्रमात् कृत्स्नानि तानि तु। ज्ञात्वा विघ्नस्य रूपाणि नाशवन्ति च सर्वथा ॥ १४१८ ॥ विदित्वा श्रीहरेः श्रेष्ठं माहात्म्यं सर्वथोत्तमम्। उपशान्तिस्थितौ वर्तमानश्च सततं हरेः ॥ १४१९ ॥ भजनं यो विदध्यात्स भक्तस्त्वैकान्तिको भवेत्। अत्र तूपशमश्चायं–यो निजेन्द्रियवाजिनाम् ॥ १४२० ॥ तथाऽन्तःकरणानां च वृत्तीः श्रीपरमात्मनः। स्वरूपेऽखण्डिताः संयोजयेद्वै सावधानकः ॥ १४२१ ॥ न दद्यात्ताः प्रगन्तुं तु पञ्चविषयमण्डले। एवं स्थैर्यं हरेर्मूर्तावुक्तश्चोपशमस्त्वयम् ॥ १४२२ ॥ अथ श्रीजीमहाराजः स्मर्तव्यः सहितो निजैः। अलौकिकैर्महैश्वर्यैर्महिम्नाऽलौकिकेन च ॥ १४२३ ॥ युक्तोऽनन्तप्रकाशाढ्यमूर्तिर्वीक्ष्यो हरिर्मुहुः। गुणत्रयमहावेगान् पंचविषयजानपि ॥ १४२४ ॥ वेगान् विलीय सततं ज्ञातृरूपेण वर्तनम्। सदाऽयं त्वाक्षरो भावः कथ्यते हि निजात्मनः ॥ १४२५ ॥ अथाऽभावो विरोधश्चोपशान्तिः—रागनाशकाः। एभिस्त्रिभिर्हि वैराग्यं

---

मूलपुरुषके ऐश्वर्य दीखने लगते हैं, किन्तु इन ऐश्वर्योंको विघ्नरूप व नाशवन्त जानके तथा श्रीजीमहाराजकी महिमा समझके उपशममें रहकर भजन किया करे तब ऐकान्तिक भक्त होता है, इस उपशमका यह अर्थ है–अपनी इन्द्रियाँ व अन्तःकरणों की वृत्तियोंको भगवान्के स्वरूपमें अखण्ड लग्न कर रखना, कभी भी पंच विषयोंमें जाने देना नहीं, इसको उपशम समझना, और श्रीजीमहाराजको संभारते रहना, सो भी अलौकिक ऐश्वर्य व अलौकिक महिमा सहित बारबार अतिशय सँभारते रहना, तथा अतिशय प्रकाशमान देखते रहना, तथा तीन गुण व पंचविषयोंके जो वेग आवे उन्हें मिटाकर ज्ञानिपना रूप बर्तना यह अक्षरब्रह्मपनाका भाव कहाता है, और आँटी अभाव व उपशम इन तीनों द्वारा वैराग्य उपजता है, इनमेंसे जो उपशमसे वैराग्य उपजता

जायते तत्र तत्र च ॥ १४२६ ॥ श्रेष्ठं तूपशमोत्थं वै वैराग्यं, चाथ मध्यमम्। अभावजं तु वैराग्यं, कनिष्ठं तु विरोधजम् ॥ १९६ ॥ १४२७ ॥ मानं चापि कथं नश्येदित्यस्योत्तरमाह च। उपायस्तद्विनाशाय सर्ववस्तुषु सर्वथा ॥ १४२८ ॥ दोषबुद्धिं प्रकुर्वीत, क्रिया विद्याश्च यावतीः। कुक्षिरोमनिभाश्चापि, रिक्तकूपाद् यथा क्वचित् ॥ १४२९ ॥ वार्यूर्ध्वसेचनेऽप्येतस्मान्नवारि मिलेत् क्वचित्। तथा मायिकसत्ताभ्यः शान्तिवारि मिलेन्न हि ॥१४३०॥ हर्यग्रे च सतामग्रे मानं विघ्नकरं महत्। तेषां प्रसन्नतायां, तज्ज्ञात्वा तथ्यार्थमेव च ॥ १४३१ ॥ अहन्ताऽङ्कुरशून्यश्चेद् वर्तते यस्तु तस्य वै। द्रुतं मानं विनश्येद्धि, हरेर्मानं न रोचते ॥१४३२॥ अतो हरेस्तु भक्तेन रक्ष्यं मानं न सर्वथा। मानं त्वाधाररूपं वै क्रोधस्य मत्सरस्य च ॥ १४३३ ॥ द्रोहेर्ष्याकपटादीनां भवत्याधाररूपि च। कल्याणपथपातादेः कारकं तद् भवत्यपि ॥ १४३४ ॥ मुमुक्षुभिस्ततो मानं त्याज्यं शत्रुवदन्वहम् ॥ १९७ ॥ अथ जीवात्मनः सन्ति चत्वारो मोक्षहेतवः ॥ १४३५ ॥ एकः श्रीजी-

---

है वह श्रेष्ठ है, और दूसरे दोसे उपजा वैराग्य तो मध्यम व कनिष्ठ है ॥ १९६ ॥ और मान कैसे मिटे ?, इसका उत्तर यह है कि—सभी वस्तुमें दोषबुद्धि रखके सभी क्रियाओंको बगलके बालकी तरह समझे तो किसी गुण क्रियाका मान न आवे, और जैसे खाली कुआँसे पानी भरनेवाले को पानी कहाँ से मिले कभी मिले ही नहीं वैसे अहंपना त्यागनेवाले में यथार्थ समझदारी होनेसे मान सदा ही टल जाता है, तथा मान तो श्रीजीमहाराजको भी रुचता नहीं है, अतः परमेश्वरके भक्तको मान नहीं रखना चाहिए, मान तो क्रोधका मत्सरका ईर्ष्याका द्रोहका व कपटका आधार है तथा कल्याणके मार्गसे गिराने वाला है अतः मुमुक्षु तो शत्रुकी तरह उसे तज दे ॥ १९७ ॥ और जीवोंके कल्याणके

महाराजो, द्वितीयास्तस्य साधवः। ऐकान्तिकास्तथा सन्ति, तृतीयास्तस्य मूर्तयः ॥ १४३६ ॥ मन्दिरे स्थापिता दिव्यास्तुर्यं सच्छास्त्रमण्डलम्। आद्यौ श्रेष्ठतमौ चात्ति त्वन्तिमौ न्यूनकौ मनाक् ॥ १८८ ॥ १४३७ ॥ अर्थेन्द्रियादिवृत्तीनां विषयेभ्यो निवर्तनम्। कर्तव्यं तु यथारीत्या तां रीतिं कथयामि वः ॥ १४३८ ॥ ज्ञातृतारूपवान् भूत्वा शब्दादिविषयान् प्रति। गम्यमानेन्द्रियवृत्तीर्निजात्मनि परात्मनि ॥ १४३९ ॥ सततं यो जुहोत्येवैतस्य स्याद्वासनाक्षयः। एवं वृत्तीर्निरुद्ध्यैव युञ्ज्याच्छ्रीपरमात्मनि ॥ १८९ ॥ १४४० ॥ भक्तस्य कर्मयोगश्च भक्तिर्ज्ञानं च सर्वथा। इत्थं योगत्रयं बोध्यं, तद्यथा कर्मयोगिता ॥ १४४१ ॥ यः स्ववर्णाश्रमप्राप्तं धर्ममालम्ब्य सर्वथा। उद्यमेनाऽर्जिताद् द्रव्याद् दशमांशं च वाऽधिकम् ॥ १४४२ ॥ विंशत्यंशं च वा न्यूनं श्रीहर्यर्थं समर्पयेत्। एवमादिक्रियाणां वै फलांशाऽर्पणमेव यत् ॥ १४४३ ॥ अत्र तत्कर्मयोगोऽस्ति

---

चार हेतु हैं, एक तो श्रीजीमहाराज, दूसरे इनके ऐकान्तिक सन्त, तीसरी मंदिरोंमें प्रतिष्ठापित भगवान्की मूर्तियाँ, व चौथे सत्शास्त्र, इनमें पहले के दो श्रेष्ठोंमें श्रेष्ठ हैं, पीछले दो उनसे कुछ न्यून हैं ॥ १८८ ॥ और इन्द्रियोंकी वृत्तियोंको विषयोंमेंसे वापस लौटाना, इसके लिये स्वयं ज्ञानिपना की रीतिसे रहके शब्दादि विषयोंके सन्मुख जाने वाली इन्द्रियोंकी वृत्तियोंको आत्मामें तथा परमात्मामें होमते रहना, तब वासनामात्र नष्ट हो जाती है ॥ १८९ ॥ और कर्म भक्ति व ज्ञानके भेद इस प्रकार हैं, भक्तको अपने वर्ण आश्रमके अनुसार रहके उद्यम करना, उसकी उपजमेंसे दशांश वीशांश भाग श्रीजीमहाराजके लिये धर्मार्थ निकालके देना, व भगवान्के लिये सब कुछ करना, यह कर्मयोग फलेच्छा वाला या फलेच्छारहित भी समझना। और त्यागी होके सभी

नैष्कर्म्यात्मफलात्मकः। अथ त्यागिजनानां तु नवधा भक्तिरेव या ॥ १४४४॥ अप्रमादेन च निष्कामात्मभावेन जायते। प्रेमपूर्वकसेवा सा भक्तियोगः प्रकीर्त्यते ॥ १४४५॥ आत्मसत्ता-प्रधानः सन् कुर्वन् मायिगुणक्षयम्। ज्ञानविज्ञानसम्पन्नः कैवल्यं भावमाश्रितः॥ १४४६ ॥ भक्तिं कुर्यात्तु यो भक्तो हरेर्वै सततस्मृतिः। उपास्तिपूरसंमग्नस्तस्य यत्स्फुरणं हरेः ॥ १४४७॥ तदेव ज्ञानयोगोऽस्ति मायाभानविलक्षणः ॥ १९० ॥ अथ श्रीजीमहाराजे तिष्ठन्ति शक्तयोऽमलाः ॥ १४४८ ॥ ज्ञातव्यास्ताः कथं? चेत्थं स्वामी प्राहतदुत्तरम्। देवेश्वरा मनुष्याश्च पशवः सर्वचेतनाः ॥ १४४९॥ श्रीहरेर्मूर्तिमावीक्ष्याऽऽकृष्यन्तेऽतिशयेन ते। स्वस्वक्रियाः प्रकर्तुं च तदा शक्ता भवन्ति न ॥ १४५०॥ एवमाकर्षिणी शक्तिर्विज्ञेया व्यापिका ह्यति। धारिणी

---

कामकाज निष्कामपनेसे करे तथा प्रमाद तजके नवधा भक्ति आदि श्रीहरिपरायण करे, यह भक्तियोग समझना। और आत्म-सत्तारूप होके ब्रह्मभावनासे कैवल्यस्थितिसे तीनगुणोंके पारकी समझवाला होना इसको ज्ञानयोग समझना॥ १९० ॥ और श्रीजीमहाराजमें शक्तियाँ रही हैं, उन्हें कैसे समझना?, तो उन्हें श्रीहरिके समान कार्यकरनेमें जरासा आज्ञामात्र लेना पड़े इतनी न्यूनता है, अतः शक्तिमान् श्रीहरिके समानपना ही अभेदरीतिसे बताया जाता है, वे ही शक्तियाँ पात्रानुसार मनुष्य पशु देव ईश्वर धाम धामेश व मुक्त सभीमें श्रीहरिकी दी हुई हैं, मनुष्यादि सभी श्रीहरिकी मूर्तिको देखके अतिआकृष्ट हो जाते हैं, स्वक्रिया करनेको समर्थ नहीं रहते हैं। भगवान्‌की मुक्तिशक्ति भक्तोंमें, संहारिणी शक्ति कालमें, बोधक शक्ति शब्दादि नामोंमें, सत्यफल शक्ति वचनमें, विधारणशक्ति भूतोंमें, आयोजनशक्ति देवताओंमें, आपूरकशक्ति मायामें, चैतन्यशक्ति पुरुषमें, सन्तानशक्ति

जीवनी चापि तथाऽन्तर्यामितात्मिका ॥ १४५१ ॥ नियामिका महाशक्तिश्चानन्ताश्च परा अपि। भवन्ते शक्तयो यस्य भक्तेषु पाविका अति ॥ १४५२ ॥ महाकालेऽपि तस्यैव शक्तिं संपरिवर्तिनी। नामादौ मुक्तिशक्तिश्च शब्दव्राते़ऽर्थबोधिनी ॥ १४५३ ॥ सार्वज्ञ्यं सर्वरूपाद्यन्वयिनी सर्वरूपिता। सर्वं कर्तुमकर्तुं चान्यथा-कर्तुं समर्थता ॥ १४५४ ॥ एवमाद्यास्तु विज्ञेयास्तथाऽऽविर्भाव-धारिणी। मूला च प्रकृतिश्चापि मुक्तिश्चर्द्धिश्च शक्तयः ॥ १११ ॥ १४५५ ॥ अथ प्रश्नोऽभवद् देवस्त्वर्षभश्च शुकस्तथा। जडाख्यभरतश्चेति त्यागिनः सन्त्यसंख्यकाः ॥ १४५६ ॥ तेषु श्रेष्ठतमः कोऽस्तीत्युत्तरं चर्षभादयः। अतिश्रेष्ठतमाः सन्त्याविर्भा-वास्त्यागिनो हरेः ॥ ११२ ॥ १४५७ ॥ अथ प्रश्नः—प्रेमिभक्त-स्त्वैश्वर्यार्थिषु वल्गति। ज्ञानी ब्रह्मसुखे संवल्गतीत्येवं हि वल्गनम् ॥ १४५८ ॥ द्वयोर्बाधस्वरूपं वै सेवामुक्तौ प्रवर्तते। कथं

---

कारणोंमें, बीजशक्ति नरमें, ग्राह्यशक्ति नारीमें, तृप्तिशक्ति ज्ञानादिमें, ऋतुशक्ति महाकालमें, आकर्षण विकर्षण शक्ति ब्रह्ममें, प्रकाशकशक्ति तथा प्रतिबिम्बशक्ति स्वच्छतत्त्वोंमें, स्वच्छताशक्ति स्वसम्बन्धमें, तथा ज्ञान क्रिया बल ऐश्वर्य ईश्वरों में, प्रकाश प्रवृत्ति नियमन त्रिगुणमें, जीवनशक्ति प्राणमें, प्राणनशक्ति साक्षिमें, साक्षिपना निजमें, व उद्धारकशक्ति सन्तमें, पावनशक्ति तीर्थोंमें, नित्ययावत् साक्षात्कारशक्ति भगवान्‌में, ऐसी अनन्तशक्तियाँ परमेश्वरकी समझना ऐसी विस्तारसे बात कहा ॥ १११ ॥ और प्रश्न हुआ कि—ऋषभदेवजी शुकजी जड़भरतजी आदि त्यागीओंमें कौन श्रेष्ठ हैं? इसका जवाब यह है कि—सभी त्यागी श्रेष्ठ हैं, मगर ऋषभदेवजी अति श्रेष्ठ त्यागी है, किन्तु परब्रह्म श्रीहरिके समान तो कोई त्यागी नहीं हैं ॥ ११२ ॥ और पूछा गया कि—प्रेमी भक्त ऐश्वर्यार्थीमें तना जाता है, और ज्ञानी भक्त ब्रह्मसुखमें

तौ द्वौ न जायेते ?, तदुत्तरमिदं त्विह ॥ १४५९ ॥ उभौ तौ चेद् विजानीयातां साकारहरेर्बहु। माहात्म्यं श्रीमहाराजस्येति बाधौ न तौ तदा ॥ १४६० ॥ आतिष्ठतां स्थितौ तत्र, तदत्र वचनामृतम्। वज्रकीलीमयं स्वामी वाचयित्वा जगाद ह ॥ १४६१ ॥ हरेर्मनुष्यभावश्च दिव्यभाव उभौ समौ। एकरूपौ, न तत्रास्ति भेदश्चाणुसमोऽपि वै ॥ १४६२ ॥ एवं साक्षाद्धरेर्जानीयान्माहात्म्यं, तु योऽस्ति वै। ज्ञानवैराग्यधर्माद्यैः साधनैर्वासनोज्झितः ॥ १४६३ ॥ दग्धकारणदेहाभः पावनः सर्वथात्मनि ॥ १९३ ॥ अथ वार्ताः कृता बह्वयोऽहंवृत्तिविषयास्तदा ॥ १४६४ ॥ आत्मसत्तास्वरूपेण वर्तमानस्य सर्वथा। अहन्ता तिष्ठतेऽतः सोऽत्यन्तं कुर्याद् विचारणाम् ॥ १४६५ ॥ साग्रहं सद्विवेकं च कुर्यान्नश्येत्तदा तु सा। एवमुक्त्वा च देहादौ भूम्याद्यष्टसुतत्त्वजाः ॥ १४६६ ॥ आवृतीर्वर्णयामास स्वामी तद्वार्तया तदा ॥ १९४ ॥ अथ श्रीजीमहाराजस्याऽन्यभगवतां तथा ॥ १४६७ ॥ भक्तेष्वस्ति

---

तना जाता है, दोनोंको तना जाना रूप जो बाध यह कैसे न होवे ?, इसका उत्तर दिया कि—परब्रह्म परमेश्वर श्रीजीमहाराजमें प्रेम ऐश्वर्य ज्ञान व ब्रह्मसुख को महिमा सहित समझे तो अन्यत्र तनानारूप बाध मिटे, इस पर वज्रकीलकवाला वचनामृत बंचवाया व कहा कि—श्रीहरिमें दिव्यभाव व मनुष्यादि भाव तुल्य व एक ही हैं इनमें रजोमात्र फरक नहीं है, ऐसा माहात्म्य समझना, जब ज्ञान वैराग्यादि साधनद्वारा निर्वासनिक हो जाय तो माहात्म्य समझा जाय, इसके बाद सभी बाध मिट जायँ ॥ १९३ ॥ और अहंवृत्तिकी बहुतसी वार्ता कहा कि—ब्रह्मसत्ता व आत्मसत्ता रूपसे वर्तता हो तो भी अहंपना रह जाता है, अतः अतिशय विवेक विचारका आग्रह रखे तो अहंपना मिटे, इस पर पृथ्वी आदि अष्टावरणोंको देहमें होनेकी भी स्पष्ट वर्ता कहा ॥ १९४ ॥

क्रियच्चापि तारतम्यं च कीदृशम् ? स्वामी चास्योत्तरं प्राह—याहृशस्तादृशोऽपि वा ॥ १४६८ ॥ श्रीमहाराजभक्तस्तु भवेद्यद्यपि सर्वथा । यादृक्तादृक्प्रतापोऽपि नानेन सन्निभाः परे १४६९ ॥ अन्येषामवताराणां भक्ता ऐकान्तिका अपि । भवेयुश्चाथ, सत्संगे त्वस्मिन्नद्य तु साधवः ॥ १४७० ॥ वर्तन्ते दत्तकपिलर्षभदेवसमाः परः । अतोऽस्य वर्तमानस्य हरेर्माहात्म्यवार्तिका ॥ १४७१ ॥ वक्तव्या का महाराजोऽधुनाऽसीमकृपोऽमिलत् ॥ १५५ ॥ हरिश्चायं मनुष्येषु सर्वभक्तेषु कीदृशः ॥ १४७२ ॥ तथैकान्तिकभक्तेषु तिष्ठते ? च तदुत्तरम् । यथा पृथ्व्यामाविलाप्सु शुद्धनिर्मलवारिषु ॥ १४७३ ॥ भासन्तेऽर्कोदयस्तद्वत् तारतम्यतया स्थितः । प्रकाशदिव्यसामर्थ्योऽन्वितमूर्तिर्विराजते ॥ १४७४ ॥ वेदस्तुतौ तदेवोक्तं—चकास्त्यनलवद्धरिः । स्वकृतानुकृतिस्तार-

---

और श्रीजीमहाराजके भक्त तथा दूसरे अवतारोंके भक्तमें कितना तफावत है ?, इस प्रश्नका उत्तर यह है कि—श्रीहरि अवतारी पुरुषोत्तमके भक्त तो अवतारसरीखे होते हैं, व अवतारोंके भक्त[1] तो ईश्वर देव आदिके समान होते हैं, श्रीहरिजीका भक्त जैसा तैसा साधारण ऐश्वर्यार्थी हो तो भी इसके समान तो दूसरे अवतारोंके ऐकान्तिक भक्त भी नहीं होते हैं, और इस सत्संगमें तो ऋषभदेव दत्तात्रेय कपिल देवके समान तो बड़े सन्त वर्तते हैं, अतः आज इनकी महत्ताकी तो क्या बात कहें !, श्रीजीमहाराज तो इस समय अढलक ढले हैं ॥ १५५ ॥ और सभी मनुष्योंमें तथा हरिभक्तोंमें तथा ऐकान्तिक में श्रीहरिजी कैसे रहे हैं ? इस प्रश्नका उत्तर कि—जैसे मलिनपृथ्वीमें मलिन जलमें तथा शुद्धजलमें व दर्पणमें—इत्यादिमें सूर्य प्रतिबिम्बकी रीतिसे कमबेशी दीखता हैं वैसे प्रकाश व अलौकिक सामर्थ्य सहित मूर्तिमान श्रीहरि पात्रकी शुद्धि भेदसे भिन्न विभिन्न भासते हैं, वेदस्तुतिमें

तम्यतः पात्रसन्निभः ॥ [१९६] ॥ १४७५ ॥ अथ जीवस्य कर्तव्यं त्वेतावद्धिसुवर्तते । यावदिन्द्रियवृत्तीनां कर्तव्या पिण्डरूपता ॥ १४७६ ॥ पिण्डरूपपदार्थोऽत्र पञ्चविषयतस्तु ताः । प्रातिलोम्येन संहृत्य होतव्याः सततं हरेः ॥ १४७७ ॥ स्वरूपे दिव्यरूपे वै तेन मुक्तस्थितिर्भवेत् ॥ [१९७] ॥ अथ श्रीनिष्कुलानन्दस्वामी पप्रच्छ सद्गुरुम् ॥ १४७८ ॥ कल्याणं किन्तु सर्वेषां समानं जायते न वा ? स्वामी तत्रोत्तरं प्राहाऽऽश्रिताः सर्वे हरेरिह ॥ १४७९ ॥ ध्येये यद्यपि यान्त्येव किन्तु साधनभेदतः कल्याणं । विविधं तेषां जायते, येऽधिकं पुनः ॥ १४८० ॥ भजन्ते श्रीहरिं चाति स्मरन्ति सततं तु ते । मुक्तानन्दमुनिप्रख्या भक्तपर्वतसन्निभाः ॥ १४८१ ॥ सम्पद्यन्ते महामुक्ताः साधनानां बलेन वै ॥ [१९८] ॥ अथोक्तं केनचित्तत्र—हरेर्भक्तेन वै पुरा ॥१४८२॥ 'महाराज ! हरे ! रक्ष स्नेहमस्मासु चाधिकम्' । लक्ष्मीकृत्या-

---

यह भी कहा है कि—भिन्न-भिन्न काष्ठोंमें भिन्न रीतिसे अग्नि भासता है वैसे तारतम्यसे भगवान् अपनी कृतियोंमें रहते हुए भासते हैं ॥ [१९६] ॥ और जीवको तो इतना ही करना उचित है कि—सभी इन्द्रियोंकी वृत्तियोंका पिण्डीकरण करना, वृत्तियोंको पंच विषयोंमेंसे वापस खींचके भगवान्के स्वरूपमें होमना॥ [१९७]॥ और निष्कुलानन्दस्वामीने पूछा कि—सभीके कल्याण सरीखे होते हैं या नहीं ?, तब स्वामीजीने कहाकि—सभी श्रीजीमहाराजके अभिप्रायमें तो चले जा रहे हैं मगर भजन स्मरण ध्यान अधिक न्यून करते हैं इस लिये एक सरीखे कल्याण नहीं होते हैं किन्तु जो अधिक ही वेगसे अधिक ही भजन स्मरण ध्यान करते हैं वे तो मुक्तानन्दस्वामी तथा पर्वतभाईके समान कल्याण प्राप्त करते हैं ॥[१९८]॥ और किसी हरिभक्तने कहा कि—हे महाराज ! स्नेह रखिएगा, इस पर स्वामीजीने बातों कहा कि—देव लोकमें

ऽर्थना प्रोक्ता, स्वामी तत्स्फुटतां व्यधात् ॥ १४८३ ॥ यथार्थवेदने स्नेहस्तूद्भवेद्धै निसर्गजः । देवलोके सुखं चाति, ततः श्रेष्ठं बृहस्पतेः ॥ १४८४ ॥ सुरेशानां तु लोकेषु, ततोऽप्यतिसुखं बहु । वैराजस्य तु लोकेऽस्ति, ततश्चाऽप्यधिकं ह्यति ॥ १४८५ ॥ प्रधानपुरुषस्यास्ति लोके, तस्मात्तदुत्तमम् । मूलप्रकृतिलोकेऽस्ति बह्वतीति महाधिकम् ॥ १४८६ ॥ एवं वै सर्वलोकेषु सुखं त्वस्त्यधिकाऽधिकम् । तेभ्यः सर्वसुखेभ्यस्त्वक्षरे धाम्न्यधिकं सुखम् ॥ १४८७ ॥ अस्त्युत्तमोत्तमं सर्वास्वादमाधुर्यसद्रसम् । यस्याऽक्षरसुखस्यैकां मात्रां विन्दन्ति सृष्टयः ॥ १४८८ ॥ तादृगनन्तनिःसीमाऽतिशयादिविवर्जितम् । यदक्षरसुखं तच्च श्रीमहाराजमूर्तिजम् ॥ १४८९ ॥ रोमांशकोटिभागोत्थं भासते धामवासिनाम् । एवं सुखं हरेर्मूर्तावस्ति पारविवर्जितम् ॥ १४९० ॥ अत्यधिकाऽधिकं सर्वोत्कृष्टं सर्वसुखाकरम् । ततः सर्वसुखानां सम्प्रदाता श्रीहरिः स्वयम् ॥ १४९१ ॥ अस्ति श्रीजीमहाराजश्चायं धर्मजनिः प्रभुः । इत्येवं महिमानं यो जानीयात्तस्य सर्वथा ॥ १४९२ ॥ स्नेहः स्वाभाविको नित्यं वर्तेत श्रीहरौ बहुः । हरेस्तत्रापि भक्ते स्यात्

---

जो बहुत सुख है उससे अधिक ज्यादा बृहस्पति आदिके लोकमें सुख है, उससे वैराजपुरुषके लोकमें बहुत ज्यादा अधिक सुख है, उससे प्रधान पुरुषके लोकमें बहुत बहुत ही ज्यादा अधिक सुख है उससे भी प्रकृति पुरुषके लोकमें सभीसे बहुत अति ज्यादा अति अधिक सुख है, वैसे तारतम्य है, मगर उन सभीसे तो अक्षरधाममें दिव्य सरस असीम व शाश्वत आनन्द सुख मोद प्रमोद हैं, और उससे भी उत्कृष्ट उत्तमोत्तम श्रीजीमहाराजकी मूर्तिमें आनन्दादि अनत्राधिक निरतिशय रहे हैं, इन सभी सुखोंके देनेवाले श्रीजीमहाराज हैं, ऐसी माहात्म्यवाली महत्ता समझनेवालेको सहज ही स्नेह रहता है, ऐसी समझ विनाका स्नेह तो

स्नेहोऽधिकतरस्ततः ॥ १४९३ ॥ एवं यस्य न विज्ञानं तस्य स्नेहस्तु कृत्रिमः । प्राकृतोऽस्ति सुवाङ्मात्ररूपो नान्ते स तिष्ठति ॥ [१९] ॥ ॥ १४९४ ॥ अथ निर्माय शिखरं पूर्णं स्यान्मन्दिरं कदा । अस्याऽर्थस्तु यदा धर्मज्ञानादीन् सद्गुणान् दृढान् ॥ १४९५ ॥ विदधीताऽतिपक्वान् वै सम्पुरुषप्रयत्नकैः । वासनाऽपि ततो निर्मूलतां याति न शिष्यते ॥ १४९६ ॥ सश्रृंगं मन्दिरं पूर्णं व्यजायत तदाऽऽत्मनः । एवं बोध्यं, विना तत्तु ह्यपूर्णं विद्यते खलु ॥ [२०] ॥ ॥ १४९७ ॥ अथ वै लक्षणं श्रेष्ठं सतां तु महतामिदम् । महतां पुरुषाणां, चाऽक्षररूपेण सर्वथा ॥ १४९८ ॥ वर्तमाना मुमुक्षूँश्चाऽक्षररूपस्थितीनपि । कुर्युः सदसतोश्चापि विवेकस्योपदेशनम् ॥ १४९९ ॥ येनोपदेशदानेन श्रीहरेस्तत्सतामपि । अत्यासक्तियुतं संगं कारयेयुः सदा हि ये ॥ १५०० ॥ एवंविधा महान्तो वै ज्ञेयाः सत्पुरुषाः शुभाः । अत्र वार्ताऽहिफेनस्य व्यसनावृतदेहिनः ॥ १५०१ ॥ जारस्त्रियाश्च विस्तारात् सदृष्टान्ता कृताऽपि च ॥ [२१] ॥ अथाऽन्ये ज्ञानवार्ताः संकुर्वन्त्यपि विदन्त्यपि

---

प्राकृत कहाता है तथा सुवाचा तुल्य है यह चिरकाल टिकता नहीं है ॥ [१९] ॥ और शिखर तक मन्दिर सम्पूर्ण कब होवे ?, इस प्रश्नका जवाब यह है कि—धर्म ज्ञानादि गुणोंको पुरुष प्रयत्नद्वारा जब अतिपक्क करे, इसके द्वारा जब वासना निर्मूल हो जाय, तब जानना कि अपनी आत्मामें शिखरवाला मन्दिर तैयार पूरा हुआ, उसके विना तो अपूर्ण कहाता है ॥ [२०] ॥ और बड़े पुरुषका यह लक्षण है कि स्वयं अक्षररूपसे वर्तते हैं, मुमुक्षुओं की स्थिति भी अक्षररूप कर डालते हैं, तथा सत् असत् का विवेकका उपदेश देके श्रीमहाराज तथा सन्तपुरुषोंका संग अति आसक्ति सहित करा देवे, येही बड़े पुरुष कहाते हैं, इस पर अफीमचीका तथा जारस्त्रीका दृष्टान्त देके बहुत वार्ता कहा

॥ १५०२ ॥ किन्तु तद्वन्नवर्तन्ते तादृशाः सन्ति निष्फलाः । अन्ये पुनर्न जानन्ति विदन्त्यपि न वार्तिकाम् ॥ १५०३ ॥ किन्तु देहेन वर्तन्ते तादृशाः सन्ति कर्मठाः । अपरे तु विजानन्ति वर्तन्ते चोत्तमा जनाः ॥ १५०४ ॥ निःकृष्टास्तु न जानन्ति वर्तन्तेऽपि न मायिकाः ॥ २०२ ॥ अथ श्रीजीमहाराजः कृपया प्राह वै—मया ॥ १५०५ ॥ मम सम्पत्तयो ज्ञानवैराग्याद्याः समर्पिताः। सर्वसङ्घस्तथा सत्संगिभ्यः सर्वाविभूतयः ॥ १५०६ ॥ मया तेषां तु सर्वेषां दुःखानि संधृतानि च । अतो यूयं समस्ता वै सुखेन भजनं हरेः ॥ १५०७ ॥ कुर्वन्त्वहर्निशं चेति, हरेरस्याऽवतारिणः । पुरुषोत्तमनाथस्य स्वरूपं च विभूतयः ॥ १५०८ ॥ स्वभावाश्च गुणा ऐश्वर्याद्याः सन्ति विलक्षणाः । सर्वेषामवताराणां स्वरूपादिभ्य उत्तमाः ॥ २०३ ॥ १५०९ ॥ दास्ये तथाऽनुवृत्तौ चोपास्तौ वै वर्तते कियत् । तारतम्यमिति प्रश्ने स्वामी प्राह तदुत्तरम् ॥ १५१० ॥ अङ्घ्र्युपासना चास्ति तदंगे द्वेऽपरे मते । अदार्ढ्ये समुपास्ते—स्त्वन्यस्य दास्यं समाचरेत् ॥ १५११ ॥

---

॥ २०१ ॥ और कोई तो ज्ञानवार्ता समझते हैं मगर बर्तते नहीं है, और कई तो समझते नहीं हैं मगर देह से बर्तते हैं, और कई में तो समझना व वर्तना दोनों हैं, और किसीमें तो दोनो नहीं हैं ॥ २०२ ॥ और श्रीजीमहाराजने कहा है कि—हमने तो ज्ञान और वैराग्य आदि हमारी सभी सम्पत्तियाँ सभी सन्तोंको तथा सत्संगियोंको सपुर्द की है, हमने तो सभीके दुःख ले लिये हैं, अतः आप सब सुखसे प्रभु भजन करिए और ऐसे अवतारी जो प्रकट पुरुषोत्तम श्रीजीमहाराज तथा उनके दिव्य स्वरूप स्वभाव गुण व विभूतियाँ ये सभी अवतारों से अत्यधिक विलक्षण हैं ॥ २०३ ॥ और रुचना दासपना व उपासना में कितना फरक है ?, इसका उत्तर स्वामीजीने दिया कि

तथाऽन्यस्यानुवृत्तिश्चाऽऽचरेदत उपासना । श्रेष्ठाऽतिवर्तते, चोपासको ह्यनुवृत्तिताम् ॥ १५१२ ॥ पालयेच्चेत्तथार्थां वै रुचिं चापि तदा तु सः । प्राज्योदयं महत्त्वं वै लभेत कृपया हरेः ॥ १५१३ ॥ एवं तु वर्तमानाया जानक्या भक्ततावधौ । काचित्त्वपि क्षतिर्नोऽभून्न्यूनता नाऽभवत्ततः ॥ २०४ ॥ १५१४ ॥ अथाऽज्ञानं च रागश्च विज्ञेयौ कीदृशौ त्विह । तावेकौ वा विभिन्नौ वेत्यत्रोत्तरमुवाच सः ॥ १५१५ ॥ अविद्याख्यं महाऽज्ञानं तत्कार्यं राग ईरितः । कार्यकारणयोरैक्याद् रागोऽज्ञानं समुच्यते ॥ १५१६ ॥ तौ तथापि विभिन्नौ स्तः स्वस्वरूपेण तद्यथा । आत्माऽनात्मविवेकाख्ययथार्थज्ञानशून्यता ॥ १५१७ ॥ परमेश्वरसद्बोधोज्झितता भ्रमरूपिता । अनात्मन्यात्मबुद्ध्याख्या त्वविद्याऽज्ञानमुच्यते ॥ १५१८ ॥ रागो गर्द्धो महातृष्णा महामोहोऽपि सम्मतः । प्रीतिः पञ्चविषयेषु लालसा राग उच्यते ॥ १५१९ ॥ स्यात् सुखानुशयी रागस्त्वज्ञानं त्वप्रमात्मकम् ॥ २०५ ॥ अथ श्रीजीमहाराजः प्राहाऽऽत्मा ज्ञायते स्फुटः ॥१५२०॥

---

उपासना अंगी है, दूसरे दो अंग हैं, उपासना दृढ न होनेसे रुचि व दासपना तो दूसरेका भी करने लगे, अतः उपासना अति श्रेष्ठ है, और जो श्रीजीमहाराजका रुचता अति यथार्थपने पाले तो वह बहुत महत्ताको प्राप्त हो जावे, उसी रीतिसे वर्तनेसे जानकीजीको भक्तपनेमें किसी बातकी कसर रही नहीं ॥ २०४ ॥ और अज्ञान व रागको कैसे समझना ?, इसका उत्तर स्वामीजीने दिया कि—अज्ञान तो अल्पज्ञान मिथ्याज्ञान भ्रान्ति अप्रमा अप्रमाण झूठा समझना वह ज्ञानाभाव का नाम है, तथा आत्मा परमात्मा आदि तत्त्वोंको विवेकसे यथार्थ नहीं समझना यह भी अज्ञान है, और इससे उपजता है राग, जो कि पंच विषयादिमें प्रीति रूप है, इस प्रकार दोनोको बहुत भिन्नपनेसे समझना

पुंप्रयत्नवतस्तत्र परमात्मा प्रकाशते। ब्रह्मानन्दमुनिः श्रुत्वा प्राह ते कृपया हरे! ॥ १५२१ ॥ ज्ञायेताऽऽत्माऽन्यथा नैव, हरिः प्राह कृपां प्रति। पश्यन्तु दृश्यते चेदं ब्रह्माण्डं त्वणुसन्निभम् ॥ १५२२ ॥ अक्षरस्यैकरोमांशे किञ्चिन्मात्रं न गण्यते। एतादृशान्यनन्ता-ऽब्जान्यण्डान्येकैकरोमजे ॥ १५२३ ॥ सुषिरे तूड्डयन्त्येवाऽक्षरं वै तादृशं महत्। अहं तस्मात्परश्चास्मि परमेशः पुरो मम ॥ १५२४ ॥ ब्रह्माण्डकोटयश्चापि तदन्तर्जीवकोटयः। क्षुद्रां तु गणनां कां वा लभन्ते? नहि वै मनाक् ॥ १५२५ ॥ ईदृशो भगवाँश्चाहं वार्तिकां भवतां पुरः। करोमि भ्रातृतामैत्रीं ददेऽजस्रं स्वदर्शनम् ॥ १५२६ ॥ भोजयामि च नामान्युच्चार्याऽऽ-ह्वयामि वस्त्विवति। नैकधाऽऽचरणैर्नित्यं करोमि स्नेहमुत्तमम् ॥ १५२७ ॥ प्रीतिं परिचयं युष्मास्वति संविदधामि च। विरुद्धं विपरीतं च किञ्चिद् यद् भवतां तु तत् ॥ १५२८ ॥ सम्बन्धिवत्प्र-सहेऽपीत्येवं वर्ते भवत्स्विह। तथापि वक्षि मां चात्र 'कृपां कुर्विति' तां कृपाम् ॥ १५२९ ॥ करोमि कियतीं ब्रह्ममुने! प्राह

---

॥ २०५ ॥ और श्रीजीमहाराजने कहा कि—पुरुषप्रयत्न करे तो आत्मा दीखती है उसमें परमात्मा भी दीखते हैं, तब ब्रह्मानन्द-स्वामीने कहा कि—आपकी कृपा हो तब दीखें, तब श्रीजीमहा-राजने कहा कि—देखिए, ये ब्रह्मणड हैं वे सब अक्षरमें अणुतुल्य भासते हैं, ये ब्रह्मण्ड तो अक्षरके आगे कुछ गिनती में नहीं हैं, ऐसे अनन्तकोटि ब्रह्माण्ड जिसके एक रोमके छिद्रमें ऊडते हैं, वैसी महत्ता तो अक्षरकी है, और मैं तो परब्रह्म उनसे भी परे हूँ, अतः मेरे सामने वे ब्रह्माण्ड व ब्रह्माण्डोंमें स्थित जीव प्राणी मात्र कौन गिनतीके हैं? किसी गिनतीके नहीं हैं, ऐसा जो मैं, वह आपके साथ बात करता हूँ भाईबंधाई करता हूँ नित्य दर्शन देता हूँ जिमाता हूँ नाम ले ले के बुलाता हूँ इत्यादि अनेक प्रकारसे

हरिस्त्विति। एवं वार्तां व्यधात् स्वामी महाराजोदितां पुरा ॥ २०६ ॥ १५३० ॥ अथाऽऽत्मा देहतश्चास्ति पृथक् तदपि वै कथम्। ज्ञायते स तु देहात्मा तदात्मकतयाऽनिशम् ॥ १५३१ ॥ अस्योत्तरं तु तज्ज्ञानाऽभावादज्ञानवैभवात्। तथाऽहंममताऽध्यासात् पृथक्त्वं ज्ञायते न हि ॥ १५३२ ॥ अनाद्यध्यासतो लोके धने नार्यां च पूरुषः। भिन्नोऽपि मन्यते लोभकामाभ्यां तदभिन्नताम् ॥ १५३३ ॥ अहन्ताममताव्याप्तश्चातीव स्त्रीधनात्यये। स्वस्य घातं करोत्येव तादात्म्यभ्रान्तिबुद्धितः ॥ १५३४ ॥ भ्रान्तो न मन्यते भिन्ने मन्यते तु विवेकवान्। कश्चिद् राजा बभूवाऽयं षण्मासास्तु समाधिमान् ॥ १५३५ ॥ निरुद्धावस्थ आसीत् सः सामाधौ तु निजात्मनि। निवसन्नपि संस्कारैः सस्मार स्त्रीधनादिकम् ॥ १५३६ ॥ राज्यं राष्ट्रादिकं, पश्चात् समाधेर्बहिरायर्यौ। तस्मायुपादिदेशातिविवेकं भिन्नतामयम् ॥ १५३७ ॥ सन्तदासाख्ययतिराट् तदा राजा जडात्मनोः। विवेकं साधुसत्संगाल्लब्ध्वा मत्वा पृथङ् निजम् ॥ १५३८ ॥ तादात्म्यं प्रजहौ राज्यस्त्रीधनादौ विवेकतः।

---

आपके साथ स्नेह करता हूँ तथा पहचान करता हूँ तथा कुछ उलट पुलट बार्ता गया हो तो उसे सम्बन्धी की तरह सहन करता हूँ, इस रीतिसे आपके साथ बर्तता हूँ तो भी आप कहते हैं कि—कृपा करिए, तो कितनी कृपा करूँ ?, इस प्रकार स्वामीजीने श्रीजीमहाराजकी बात कहा ॥ २०६ ॥ और आत्मा देहसे भिन्न है तो भी एकसा क्यों हो जाता है ?, इसका उत्तर कि—अनादिकालका प्रकृतिका संयोगसे ओत प्रोत हो गया है, इससे गर्भमें एकसा कर्ममें एकसा अहं ममत्व में एकसा बनकर ही साधनोंसे काम लेता है, जैसे धन व पुरुष अलग है तथा स्त्री व पुरुष अलग है तो भी अतिलोभनामक सम्बन्धसे व अतिकामनामक संसर्गसे एकसा व्यवहार कर लेता है, अतः लोभ व

संस्काराश्च पृथग्भावापन्नास्तस्य बभूविरे ॥ १५३९ ॥ तन्नाशार्थं पुनर्यत्नं चकाराऽपि विवेकवान्। ब्रह्मरूपस्त्वहं चात्मा सर्वमन्यन्मृषेति वै ॥ १५४० ॥ ततस्तस्य लयं प्राप्ताः संस्काराः स्त्रीधनादिजाः। असंप्रज्ञातसंस्थश्च बभूवाऽऽत्मसुखादिमान् ॥१५४१ ॥ एवमैकान्तिकभक्तसत्संगाऽभ्यासकारिणः। जडचेतनभेदादिप्रवेकाप्तिः प्रजायते ॥ १५४२ ॥ अध्यासध्वंससद्भावे विभ्रान्तेर्विगमे ततः। जाते प्रमाप्रकाशे च सदा ब्रह्मात्मदर्शिता ॥ १५४३ ॥ सम्पद्यते, ततश्चेदं ज्ञात्वा देहत्रयान्निजम्। पृथङ् मत्वाऽऽत्मसत्ताको वर्तेताऽक्षररूपवान् ॥ २०७ ॥ १५४४ ॥ अथ स्वामी जयानन्दः प्राह—कार्यो न रुट् क्वचित्। एवं निश्चयसन्धाने पक्वेऽभ्यासे तथाविधे ॥ १५४५ ॥ न स्यात् क्रोधः कदाचिद्धै स्वामी दार्ढ्यंतदाह च। अस्त्येवं त्वेव सत्संगद्वारा जीवस्त्वयं ह्यति ॥ १५४६ ॥ समर्थो जायतेऽतो वै—लोभकामादिगोचराः। संकल्पा नहि कर्तव्या,-इति दार्ढ्यहठं तु यः ॥ १५४७ ॥ गृह्णीयात्तस्य संकल्पा

---

कामके नाशसे धनस्त्रीसे व्यवहार भी मिट जाता है, स्पष्ट तो यह है कि आत्मा स्वच्छ व व्यापक द्रव्य है उसमें अन्य सभी चीजें भोग्याकारसे बुद्धिसहित घुस जाती हैं, तब आत्मा भी बुद्धिरूप नारीमय व भोग्यमय बन जाता है, एक राजा छ मास तक समाधिमें बैठा रहता था, मगर वहीं बैठा हुआ ही राज्य स्त्री धन आदिको संभारता रहता था, पीछे उसे सन्तदासजी साधुका योग हुआ, उस साधुने उसको राज्य स्त्री धनादिकी वृत्तियोंसे मुक्त कर डाला, अतः एकान्तिक भक्तके सत्संगद्वारा अभ्यास करने पर आत्माका देहसे पृथक्पना बर्तने लगता है, अतः सर्वदा तीनों शरीरोंसे निजात्माको विवेकबुद्धिद्वारा पृथक् चलाते रहना ॥ २०७ ॥ और जयानन्दस्वामीने कहा कि—क्रोध नहीं ही करना ऐसी दृढ़ताके साथ आँटी लगा दे तो क्रोध कभी उपजेही

न स्युर्यस्माद्बली हि सः । जातोऽतीवेति सत्यार्थव्रतो यत् सः समिच्छति ॥ १५४८ ॥ तत्करोत्येव सफलं, सिद्धिः सत्यस्य हस्तगा ॥ २०८ ॥ अथोक्तं साधुना—सन्तः सर्वे सन्त्यपि वै समाः ॥ १५४९ ॥ तत्र स्वामी प्रजगाद—यस्य नास्ति विवेकिता । तस्य सन्तः समाः सर्वे, न तु विक्तिप्रशालिनः ॥ १५५० ॥ विवेकी त्वन्वहं कुर्यान् महापूरुषसंगमम् । बुद्धेस्तेनाऽस्य वै प्राज्यं वैशारद्यं प्रवर्धते ॥ १५५१ ॥ प्रकाशे जायमानेऽस्य तारतम्यं प्रभासते । श्रैष्ठ्याऽश्रैष्ठ्येऽपि भासेते यथार्थे तत्त्वधीबलात् ॥ १५५२ ॥ अथ पृष्टं नु कः श्रेष्ठः सरसः साधनैश्च वा । महतां पुरुषाणां यः संगेन च दृढान्निजान् ॥ १५५३ ॥ नियमान् वर्तमानाख्यान् पञ्च कुर्यात् स, वाऽपरः । सहजैः पञ्चनियमैर्दृढैर्युक्तोऽस्ति सर्वदा ॥ १५५४ ॥ सोऽयं श्रेष्ठश्च सरसः ?, चात्रोत्तरमिदं मतम् । साधनैश्च सतां संगैर्योऽस्ति नियमदार्ढ्यवान् ॥ १५५५ ॥ सोऽस्ति श्रेष्ठतमस्तस्याऽसद्देशसमयादिभिः । नियमानां न नाशः स्याद् यतः सः सरसः सदा ॥ १५५६ ॥ यस्य त्वेवंविधा नैव वर्तमानादिरूद्वृषाः । दृढी-

---

नहीं, इसपर स्वामीजीने कहा—जीव तो सत्संगद्वारा बहुत समर्थ हो जाता है, अतः लोभ कामादिके संकल्प करने ही नहीं चाहिए, केवल वैसी दृढ़ आँटी बांधके संकल्पोंको मार डालना, तब संकल्प नहीं उठते हैं, जीव तो ऐसा बलिष्ठ है कि जब जो धारता है वह कर पाता है, सच्चा शूर होके करना चाहिए ॥ २०८ ॥ एक सन्तने कहा—सभी सन्त लोग तो सरीखे ही भासते हैं । तब स्वामीजीने कहा—जो विवेकी हो तथा महापुरुषका समागम करता हो तो तब उसको सरस नरस व्यक्ति मालूम पड़ती है, तब किसीने पूछा कि—साधन द्वारा तथा महापुरुषका संग द्वारा पंच वर्तमान दृढ़ करनेवाला सरस? या सहजही पंचवर्तमानकी दृढ़तावाला सरस ?, इसका उत्तर दिया कि—महत्पुरुषका संगद्वारा पंच-

परं सत्यं जगदुर्दिव्यसाधवः ॥ १८६१ ॥ तद्रुचिज्ञा दिव्यनेत्रा भक्ता भागवताः पराः। इत्येवं निर्णयाऽऽल्यैश्च भाव्यमस्माभिरन्वहम् ॥ [२४९] १८६२ ॥ अथैकदा तु वार्तायाः प्रसंगे स्वाम्युवाच यत्। सर्वे स्वयं प्रकुर्वन्ति निर्णयं न तु शुद्धया ॥ १८६३ ॥ परंपरया कुर्वन्ति, तत्र पप्रच्छ कश्चन। साधुः स्वामिन् कथं ज्ञेया शुद्धा श्रेष्ठा परंपरा ॥ १८६४ ॥ स्वाम्युत्तरं जगादाऽस्य श्रीपुरुषोत्तमाद्धरेः। यद्वा तस्य सतामैकान्तिकानां मुखतः शुभा ॥ १८६५ ॥ हरिकृष्णमहाराजस्याऽवतारित्वरीतिका। समज्ञेया तथैकान्तिकानां या परमोत्तमा ॥ १८६६ ॥ समज्ञप्तिश्च सा ज्ञेया ज्ञेयो ब्रह्मपुरस्य च। गोलोकादिकधाम्नां वै महिमा तन्निवासिनाम् ॥ १८६७ ॥ पार्षदानां च मुक्तानां ज्ञातव्यो महिमा तथा। मृत्युलोकस्थितानां च पार्षदानां तथा पुनः ॥ १८६८ ॥ एतल्लोकीयतीर्थानां धाम्नां च महिमा वरः। स्थानानामपि दिव्यानां बोध्यः सन्महिमा त्वति ॥ १८६९ ॥ एषा सर्वाऽपि संशुद्धा कथ्यते सुपरंपरा। एतां ज्ञप्तिं विना केचित् त्वात्मानन्द-

---

बात परम सत्य है, तथा श्रीपरमेश्वरकी मरजीको जाननेवाले जो परमभागवत भक्त उनकेद्वारा कही हुई है ॥ [२४९] ॥ और एक वार्ताके प्रसंगमें स्वामीजीने कहा—सब अपनेसे ठराव कर लेते हैं किन्तु शुद्ध परंपरा द्वारा नहीं करते हैं, तब सन्तने पूछा—शुद्ध परम्परा कैसे समझना ?, तब स्वामीजीने कहा—श्रीपुरुषोत्तम भगवान् या उनके ऐकान्तिक भक्तसे श्रीहरिकृष्णजी महाराजकी अवतारीपनेकी रीतिको समझना, तथा ऐकान्तिकोंकी समझको समझना, तथा ब्रह्मपुर गोलोक आदि धामोंकी महिमाको समझना और धामोंके पार्षद व भूमिपरके पार्षदोंकी महिमा समझना, तथा इस लोकके तीर्थ व धामोंकी महिमा समझना, इसको शुद्ध परम्परा कहते है, ऐसे समझे विना तो कई आत्मानन्दस्वामीको

गुरुं तथा ॥ १८७० ॥ रामानन्दस्वामिनं च नरनारायणादिकान् । अपि जानन्ति पुरुषोत्तमं श्रीपरमेश्वरम् ॥ १८७१ ॥ अतः संप्रोक्तसंशुद्धपारम्परिकरीतितः । ज्ञातव्यो भगवान् धर्मपुत्रः श्रीपुरुषोत्तमः ॥ २५० ॥ १८७२ ॥ अथ सन्तः समस्ताः श्रीहरेर्भक्तिपरा अपि । शिक्षन्ते केचन ज्ञानं केचिद्वैराग्यमित्यपि ॥ १८७३ ॥ अन्ये धर्मं प्रशिक्षन्ते भक्तिं चापि च केचन । किन्तु तत्राऽर्जने ते ते कुर्वन्तीर्ष्यां कथं मिथः ? ॥ १८७४ ॥ स्वाम्युत्तरं जगादाऽस्य येतु श्रीहरितस्तथा । ऐकान्तिकेभ्यः सद्भ्यश्च भक्तिं नवविधां पराम् ॥ १८७५ ॥ प्रेमलक्षणरूपां च प्रशिक्ष्याऽस्या रहस्यकम् । ज्ञात्वा निष्कामभावेन भजन्ते परमेश्वरम् ॥ १८७६ ॥ अर्जयन्ति च धर्मादींस्तेषामीर्ष्या न जायते । किन्त्वेवं न प्रशिक्षन्ते सद्भ्यो वा श्रीहरेस्तथा ॥ १८७७ ॥ स्वयमेव प्रशिक्षन्ते ममाऽहंभावसंभृताः । अतस्तेषां मिथो दोषबलादीर्ष्या प्रजायते ॥ २५१ ॥ १८७८ ॥ अथैकदा तु धर्मार्थकाममोक्षपरायणान् ।

---

तथा रामानन्दस्वामीको तथा नरनारायण आदिको श्रीपुरुषोत्तम समझ लेते हैं, अतः उक्तप्रकारकी शुद्ध परम्पराकी रीतिसे श्रीपुरुषोत्तमको समझना ॥ २५० ॥ और सभी सन्त श्रीहरिजीकी भक्ति करते हैं, उनमेंसे कोई ज्ञान भी सीखते हैं, कोई वैराग्य सीखते हैं कोई धर्म व कोई भक्ति ही सीखते हैं, किन्तु परस्पर ईर्ष्या क्यों करते होंगे ?, इसका उत्तर स्वामीजीने दिया कि— अहंममतावाले को ईर्ष्या आती है, जो श्रीजीमहाराजसे या उनके अतिप्रिय जो ऐकान्तिक भक्त उनसे नवधा भक्ति या प्रेमलक्षणा भक्ति सीखके उसके मर्मको समझके निष्कामभावसे भक्ति आदि करे तो ईर्ष्या नहीं आती है, किन्तु वैसे सन्तपुरुषसे तो सीखते नहीं हैं अपने आप अहंममत्वसे सीख लेते हैं इससे ईर्ष्या भी होती रहती है ॥ २५१ ॥ और एक दिन स्वामीजीने

चतुरः पुरुषान् स्वामी प्रालक्ष्याऽऽह सुवार्तिकाम् ॥ १८७९ ॥ मोक्षमात्राभिवृत्तीनां मनस्सु कस्यचित्त्वपि। पदार्थस्य स्पृहा नास्ति स्वप्रियस्यापि सर्वथा ॥ १८८० ॥ स्त्रीपुत्रादौ क्षयं प्राप्ते याते लक्षादिसद्धने। सम्पत्स्वपि विनष्टासु ग्रामे राज्ये गतेऽपि च ॥ १८८१ ॥ मोक्षार्थिहृदये घातोऽवरोधो न हि जायते। सुखेन भजनं कुर्याच्छ्रीहरेः सर्वथा स्थिरः ॥ १८८२ ॥ नरसिंहाख्यभक्तेन यथा भक्तिः कृता पुरा। तथा कुर्यात् स्वहृदये नाऽन्यवद् दुःखितां व्रजेत् ॥ १८८३ ॥ मोक्षार्थी न करोत्यर्थादीनां संग्रहमल्पकम्। कुर्याच्चेत् तत्स्पृहां त्यक्त्वा हर्यर्थं हि न चान्यथा ॥ १८८४ ॥ एवमुक्तप्रकारेण विवेकात् प्रसमाचरेत्। कल्याणात्मकधर्मेऽपि स्थित्वैवार्थसमर्जनम् ॥ १८८५ ॥ कुर्यादेव, च धर्मस्य फलं नैव प्रभोगिताम्। विषयाणां विजानीयाद् भोगं नेन्द्रियतृप्तये ॥ १८८६ ॥ प्रकुर्यात् किन्तु देहस्य स्थैर्ययात्रा फलार्थकम्।

---

धर्म अर्थ काम व मोक्ष ये जो चार पुरुषार्थ तत्परायण मनुष्योंकी वार्ता कहाकि—जो मोक्ष परायण वर्तते हैं उनके मनमें किसी प्रकारकी स्पृहा नहीं होती है, चाहे स्त्री पुत्र आदि नष्ट हो जायँ या लाखोंकी दौलत चली जाय या गाँव गिरास भी चले जायँ किन्तु उनके मनमें उस बातकी खटक या घबराहट होवे नहीं, किन्तु नरसिंह मेहताकी तरह श्रीहरिजीका भजन सुखपूर्वक किया करे, कभी भी अन्तरमें अन्यकी तरह दुःखीपना न माने, तथा मोक्षार्थी ही है इसलिये किसी अर्थ आदिका संग्रह न करे, अथवा कुछ भी करते हैं तो भी समझके ही करते हैं, कल्याण रूप धर्ममें रहकर ही अर्थ उपजाते हैं। यह धर्मभरा अर्थ कहाता है इसका फल विषयभोग नहीं मानते हैं, तथा विषयभोगका फल इन्द्रियोंको खेलवाना ही नहीं मानते हैं, किन्तु देह यात्रा निर्वाहमात्र समझते हैं,

देहस्थितेः फलं चापि सांगभक्तिविधापनम् ॥ १८८७ ॥ भक्त्या प्रसाद्य वै स्वामिनारायणहरिप्रभुम् । तस्यैकान्तिकभक्तत्वप्राप्त्यर्थं यत्न इत्यपि ॥ १८८८ ॥ ये त्वज्ञानिजनास्ते तु जानन्ति न तथा फलम् । किन्तु धर्मफलं द्रव्यप्राप्तिरूपं हि केवलम् ॥ १८८९ ॥ द्रव्यफलं विषयाणां भोगा एव न चेतरत् । इन्द्रियाणां रञ्जनं च, धर्मो भोगाः पुनः पुनः ॥ १८९० ॥ इत्येतदसदज्ञानं निषिद्धं शास्त्रकारिभिः । उक्तं भागवते चापि स्कन्धे तु प्रथमे यथा ॥ १८९१ ॥ 'धर्मस्य ह्यापवर्ग्यस्य नाऽर्थोऽर्थायोपकल्पते । नार्थस्य धर्मैकान्तस्य कामो लाभाय हि स्मृतः ॥ १८९२ ॥ कामस्य नेन्द्रियप्रीतिर्लाभो जीवेत यावता । जीवस्य तत्त्वजिज्ञासा नाऽर्थो यश्चेह कर्मभिः' ॥ १८९३ ॥ अथ येऽर्थपराः सन्ति तेऽप्यवस्थाय वै वृषे । अर्थस्य संग्रहं सम्यक् प्रकुर्वन्तीति केवलम् ॥ १८९४ ॥ ये च धर्मपरास्तेऽपि त्वर्थं धर्मान्वितं बहुम् । सञ्चिन्वन्तीति तौ द्वौ च मोक्षार्थं तद्धनव्ययम् ॥ १८९५ ॥ कुर्वन्तीति समज्ञप्तिस्तेषां

---

देहधारण कर रखनेका फल भी सभी अंग सहित भक्ति करके श्रीहरिजीका एकान्तिक भक्त होना यही तथा मोक्ष लेना यही समझते हैं। और जो अज्ञानी हैं वे तो ऐसे समझते हैं कि— धर्मका फल धनप्राप्ति ही है, धनका फल विषयभोगही है, भोगका फल इन्द्रियोंको मोद प्रमोदमें खेलाना, व बार-बार ऐसे ही किये करना। मगर ऐसी असत् समझकी शास्त्रोंने मना किया है, श्रीमद्भागवतके प्रथम स्कंधमें कहा है कि—मोक्षके लिये जो धर्म इसका फल अर्थ नहीं कल्पना, अर्थका फल कामना नहीं कल्पना, कामनाका फल प्रीति या रति ही नहीं समझना, किन्तु जीवनयात्रा चलाके तत्त्वजिज्ञासाद्वारा मोक्ष प्राप्त करना। और जो अर्थपरायण हैं वे तो धर्ममें रहके अर्थके ही संग्रह करते हैं और जो धर्मपरायण हैं वे भी धर्मके साथ अर्थही एकत्रित करते

सा तूत्तमा मता। अथ ये काममात्रस्थास्ते तु कामार्थमेव यत् ॥ १८९६ ॥ धनव्ययं च धर्मं च प्रकुर्वन्तीति सर्वथा। नास्ति तेषां प्रसंज्ञानं सुसारं किन्तु मोहभृत् ॥ २५२ ॥ १८९७ ॥ अथो जातः प्रसंगस्तु सतां पर्षति वै यथा। 'सरलो यः स्वभावः सः स्वतिश्रेष्ठः सुसारवान्' ॥ १८९८ ॥ स्वामी तत्राह तस्यापि सारल्यं दूषणं क्वचित्। सम्पद्यते। यतः सोऽपि सतां संगेन सर्वथा ॥ १८९९ ॥ धर्मज्ञानादिसहितां कुर्वन् भक्तिं हरेः प्रभोः। अप्यल्पबुद्धिभक्तस्य संगं चेत् प्राप्तवान् भवेत् ॥ १९०० ॥ तस्य भ्रान्तिमयीं वार्तां विरुद्धां बाधितां तथा। शृण्वानः स्याद्विमार्गोद्गस्तेन सञ्चालितश्चलन् ॥ १९०१ ॥ पतनं प्राप्तवान् स्याच्च सौरल्ये दूषणं हि तत्। अतः सर्वत्र सारल्यं भूषणं नहि जायते ॥ १९०२ ॥ किन्त्वावश्यकता यत्र तत्र तद्भूषणं मतम्। एवं विज्ञाय सारल्यं रक्षितं स्यात् तदुत्तमम् ॥ १९०३ ॥ आण्टिकाऽऽख्यो हठश्चापि यत्राप्यावश्यको भवेत्। धर्माद्याचरणे तत्र सुसंज्ञात्वा प्ररक्ष्यते

---

हैं, अगर ये दोनो अर्थको मोक्ष मार्गके लिये लगावे तब तो ठीक है वे अच्छे समझदार माने जायँ। और जो कामनापरायण हैं वे तो अर्थ व धर्मको कामनामें ही लगा देते हैं इनकी समझ तो अच्छी नहीं कहाती है ॥ २५२ ॥ और सन्तसभामें बात हुआ कि—सरलस्वभाव अच्छा होता है। तब स्वामीजीने कहा कि—सरलस्वभावमें यह दोष भी है कि—सरलस्वभाववाला सत्पुरुषके संगद्वारा धर्म ज्ञानादि सहित श्रीहरिजीमहाराजकी भक्ति करता हो मगर बीचमें उसको अल्पबुद्धिवाला भक्त मिल जावे तथा इधर-उधरकी उलट पुलट समझा देवे व दूसरे रास्ते चढ़ा देवे तब वह चढ़जाय, अतः सभी जगह सरलपना ठीक नहीं है, जहाँ रखना योग्य ही वहाँ समझके रखना ही ठीक है, और आँटी भी जहाँ रखनी घटे वहीं धर्मादि पालनेमें समझके ही रखे, जहाँ न

॥ १९०४ ॥ यत्राऽस्याऽऽवश्यकता नो तत्र रक्ष्येत नैव च । एवं-वर्तनशीलस्य विज्ञानित्वं हि कथ्यते ॥ १९०५ ॥ अन्यथाऽस्य तु कथ्येत स्वभावाऽधीनता जनैः ॥ २५३* ॥ अथ धैर्यं तिष्ठते न क्रूरकाले कथञ्चन ॥ १९०६ ॥ तत्कथं संप्रतिष्ठेत कीदृशज्ञान-साधनैः ? स्वामी तदुत्तरं प्राह—यस्य माहात्म्यपूर्विका ॥ १९०७ ॥ अस्ति भक्तिर्महाराजस्याऽऽत्मनिष्ठाऽतिपक्वता । विचारो ब्रह्मभावस्य तस्य धैर्यं प्रतिष्ठते ॥ १९०८ ॥ त्रेधा धैर्यं विद्यते—यत् क्रियाकाले तु तिष्ठति । कस्यचित्, कस्यचिन्मध्ये क्रियाया उपतिष्ठते ॥ १९०९ ॥ कस्यचित्तु समाप्तौ यत् क्रियाया उपतिष्ठते । आद्यः श्रेष्ठः सदाधैर्यो मध्यधैर्यस्तु मध्यमः ॥ १९१० ॥ अन्तधैर्यः कनिष्ठो वै धैर्यहीनोऽ-धमो मतः । मुक्तानन्दमुनेर्नित्यं धैर्यं श्रेष्ठं सदाऽभवत् ॥ १९११ ॥ स्वाम्यग्रे कश्चिदागच्छेद् वार्तां कथयितुं जनः । तदा स्वामी प्रथमं तं चिरमास्ते विलोकयन् ॥ १९१२ ॥ संशृण्वँस्तत्कथनं च तत्त्वं च विचारयन् । अवगत्य च तत्सारं, प्रवक्तव्यं घटेत चेत् ॥ १९१३ ॥

---

रखनी घटे वहाँ न रखे, यही समझदार कहाता है, ऐसा न होने-से तो स्वभावाधीन कहाता है ॥ २५३* ॥ और धीरज समय पर नहीं रहती है सो कैसे समझे तो रहे ?, इसका उत्तर स्वामीजीने किया कि—जिसको श्रीजीमहाराजकी माहात्म्य सहित भक्ति हो तथा आत्मनिष्ठाका परिपक्व विचार हो उसको रहे, वह धीरज भी तीन प्रकारकी है, एक तो-क्रिया करते-करते भी धीरज रहे, दूसरी-क्रिया करनेमें बीचमें याद हो आवे तब रहे, तीसरी-क्रिया सम्पूर्ण होनेके बाद धीरज याद आने पर रहे, ऐसी धीरज वाले क्रमशः उत्तम मध्यम व कनिष्ठ कहाते हैं, और जिसको याद हो न आवे वह तो अधम कहाता है। मुक्तानन्दस्वामीको कोई भक्तजन कुछ बात कहने आवे तब प्रथम तो स्वामी उसके सामने देख रहते थे तथा तलाशते

तदैव कथयेदेनं चाऽन्यथा तु निजे हृदि। अन्तर्दृष्टिं समास्थाया-ऽऽन्तरं भजनमाचरन् ॥ १९१४ ॥ श्रीहरौ स्थिरतां गच्छेदेवं धैर्यमभूत् सदा। तद्वद् यः स्याद्बलिष्ठेन विचारेण सदाऽन्वितः ॥ १९१५ ॥ तस्य धैर्यं हि समये क्रूरेऽपि समतिष्ठते। अतः स्वाप्ननिभं पिण्डं ब्रह्माण्डं स्वाप्नसन्निभम् ॥ १९१६ ॥ कुक्षिरोमसमं चात्यसारं ज्ञात्वा त्रिवर्ष्मतः। पृथग्ज्ञानिस्वरूपेण वर्तमानस्य सर्वदा ॥ १९१७ ॥ धैर्यं वर्तेत सततं विषमे समयेऽपि च। अत्र निदर्शनं स्वामी जडाख्यभरतस्य च ॥ १९१८ ॥ अखण्डानन्द-संज्ञस्य स्वामिनश्च प्रदाय वै। वार्तां बहुविधां चक्रे सर्वदा धैर्यशालिनीम् ॥ १९१९ ॥ अत्तुं व्याघ्रे चागतेऽपि धैर्यं स्वामी जहौ न हि। देवीबल्यर्थमाप्तोऽपि धैर्यं नैवाऽत्यजज्जडः ॥ २५४ ॥ १९२० ॥ अथ सन्तः पृष्टवन्तोऽवताराः सर्व एव ये। असमानाः समाना वा?, कश्चित्प्राह समा इति, ॥ १९२१ ॥ तत्र शंका-कथं चैषां सामर्थ्ये न्यूनतोर्ध्वता?। साम्यवाद्याह-सामर्थ्यं यत्र यावदपेक्षितम् ॥ १९२२ ॥ दर्शयन्ति महद्वाऽल्पं तावत्, स्वामी जगाद यत्। अवताराः समाना न सर्वे सन्ति

---

जाते थे, पीछे कहना घटे तो उत्तर देते थे, नहीं तो अन्तर्दृष्टि करके श्रीहरिजीके भजनमें गरकाव हो जाते थे, वैसे बलिष्ठ विचारवालेको समयपर धीरज रहती है, अतः पिण्ड ब्रह्माण्डको स्वप्नतुल्य अति असार बगलके बालके तुल्य समझके तीन शरीरोंसे पृथक् जानपनारूप निरन्तर बर्ताव करते रहे तो समय-पर धीरज रहती है। इसपर जडभरत तथा अखण्डानन्दस्वामीके दृष्टान्तसे बहुत वार्ता कहा ॥ २५४ ॥ और सन्तने पूछा कि अवतार सभी सरीखे हैं या भिन्नभाववाले हैं?, तब दूसरे सन्तने कहा कि—सभी सरीखे हैं। इस पर शंका हुआ कि—तब सामर्थ्यमें कमबेशी पना क्यों है?, तब उसी सन्त ने कहा—

कदापि वै ॥ १९२३ ॥ विभवेषु तु चावेशावताराः सन्ति केचन । एवं कलाऽवताराश्च सन्ति केचन चांशजाः ॥ १९२४ ॥ न्यूनत्वाऽऽधिक्यविरहे ब्रह्माण्डे चिरजीविनोः । भाविमन्वन्तरे तत्र व्यासपरशुरामयोः ॥ १९२५ ॥ सप्तर्षिव्रातमध्यस्थर्षित्वोक्तिः संभवेत् कथम् । तद्विभूत्यवताराश्चाऽसंख्याः सन्ति भवन्ति च ॥ १९२६ ॥ यदा श्रीजीमहाराजः प्राकट्यं प्राप भूतले । ततो ये येऽवताराणामासँश्चोपासका भुवि ॥ १९२७ ॥ ते चायन् दर्शनार्थं तान् दर्शयामास धर्मजः । तेषां तेषामिष्टदेवानवतारान् पृथक् पृथक् ॥ १९२८ ॥ चतुर्विंशत्यवतारान् व्यापकानन्दयोगिनि । लीनाँश्च कारयामास धर्मज्ञः श्रीहरिः स्वयम् ॥ १९२९ ॥ अथ पर्वतभक्तस्य पट्टिलस्य पुरः पुरः । सान्तिकस्याऽग्रभूक्षेत्रेऽवतारा व्यचरन्मुहुः ॥ १९३० ॥ अयं विज्ञानदासस्तु विलोकयति चक्षुषा । अवतारान्महतस्तु महतोऽपि करधृतान् ॥ १९३१ ॥ चामरान् भ्रामयतः श्रीहरेरुपरि पार्श्वगान् । छत्रं प्रधारयतश्च

---

सो तो जहाँ जितना दिखाना घटे वहाँ उतना दिखाते हैं । इसपर स्वामीजीने कहा कि—अवतार सभी समान नहीं होते हैं, कोई आवेशावतार कोई कलावतार कोई विभूतिअवतार कोई अंशावतार कोई विभवावतार कोई स्वरूपावतार आदि विभिन्न होते हैं, देखिए—परशुरामजो तथा व्यासजी चिरंजीवी रहे हैं वे आगामी मन्वन्तरमें सप्तऋषिमें गीने जायँगे, सरीखेमें यह कैसे घटे !, और श्रीजीमहाराज जब प्रकट हुए तब जो जो अवतारोंके उपासक दर्शनको आते थे उन्हें उनके इष्टावतारमूर्तियोंके दर्शन कराये थे, तथा श्रीव्यापकानन्दस्वामीमें चौवीस अवतार लीन करा डाले, तथा पर्वत भाई पाटीलके सीर-हलके आगे वे अवतार चलते जाते थे, और इस विज्ञानदासजीको दर्शन हो रहा है कि—श्रीजीमहाराजके उपर बड़े बड़े अवतार चँवर धर रहे हैं

तस्माद्विभवमूर्तयः ॥ १९३२ ॥ आविर्भावाश्च यावन्तः सर्वे भक्तेषु ये हरेः। पुरुषोत्तमसंज्ञस्य ज्ञायन्ते भगवत्प्रभोः ॥ १९३३ ॥ वार्तामिमां तु शृण्वाना दिङ्मूढाः केचनाऽभवन्। पश्चात्प्राहुर्नु भवते शास्त्रेष्वेतन्न वेति च ? ॥ १९३४ ॥ श्रीहरेर्मुखतश्चेयं श्रुता वार्ताऽस्ति वा नहि ? । स्वामी तत्रोत्तरं प्राह—श्रीहरेर्मुखतो मुहुः ॥ १९३५ ॥ श्रुतानुवेलमेवेयं भवद्भिः संश्रुताऽस्ति च। किन्तु तस्याः समज्ञप्तौ संस्थानं कठिनं ह्यति ॥ १९३६ ॥ शास्त्रेष्वपि च वार्तेयं वर्तते किन्तु सा स्फुटा। महद्भ्यः सत्पूरुषेभ्यो ज्ञायते न स्वतः क्वचित् ॥ १९३७ ॥ अथ सन्तः समपृच्छन् वर्तमाने नु तादृशाः। अधुनातनकाले वै महान्तः पुरुषा भुवि ॥ १९३८ ॥ विद्यमाना भवेयुर्वा न वा तेभ्यश्च वै क्वचित्। श्रीहरिर्दर्शनं स्वस्य ब्रह्मधामिभ्य उत्तमम् ॥ १९३९ ॥ यथा ददाति सततं ददन्नास्ते न वा तथा ? । स्वाम्युत्तरं जगादाऽत्र सभायामेव तादृशाः ॥ १९४० ॥ महान्तः पुरुषाः सन्ति निषण्णाः सन्निधाविह

तथा छत्र धर रहे हैं अतः सभी आविर्भाव श्रीपुरुषोत्तमभगवानके भक्तमेंसे जनाते हैं, इस बातको सुन कर कई तो दिङ्मूढ बन गये, थोड़ी देरसे बोले कि—यह बात कहीं शास्त्रमें होगी कि नहीं ?, तथा श्रीजीमहाराजके मुखसे सुनी है या नहीं ?; तब स्वामीजीने कहा—श्रीजीमहाराजके मुखसे ही कई बेर श्रवण किया है, मगर सभीको समझमें आना कठिन है, और शास्त्रमें होता है, वह सत्पुरुषद्वारा समझाता है, तब सन्तने कहाकि—आजकल वर्तमान समयमें वैसे महत्पुरुष होंगे कि नहीं ?, तथा उन्हें श्रीजीमहाराज ब्रह्मपुरमें मुक्तोंकी तरह दर्शन देते होंगे कि नहीं ?, । तब स्वामीजीने कहा कि—वैसे बड़े पुरुष तो अपनी इस सभामें ही बैठे हैं, समीपमें ही हैं, तब भी पहचानना बड़ा कठिन है, तथा जैसे ब्रह्मपुरमें श्रीजीमहाराज मुक्तोंको दर्शन

तथापि वेदनं तेषां कठिनं चाति दुःशकम् ॥ १९४१ ॥ यथा ब्रह्मपुरे श्रीजीमहाराजः स्वदर्शनम् । मुक्तेभ्यः संददात्येवं त्वैकान्तिकजनाय च ॥ १९४२ ॥ अत्रापि दर्शनं स्वस्य पृथ्व्यां नित्यं ददाति हि । तैः समं च शुभां वार्तां दिव्यमूर्तिः करोति सः ॥ १९४३ ॥ अज्ञातां च क्रियां शिक्षयत्यपि श्रीहरिश्च तान् । भक्तोऽपि श्रीहरिं किञ्चित् पृष्टव्यं समपृच्छति ॥ १९४४ ॥ एवंविधं हि साधर्म्यं हरौ सत्पुरुषे तथा । वर्ततेऽतीव यद्वत्तु स्नेहिनोर्मित्रयोर्मिथः ॥ १९४५ ॥ नाऽन्तरायोऽस्ति वृत्तान्ते क्रियायां हृदयेऽपि च । तथाऽयं भक्तवर्योऽपि श्रीहरावति युज्यते ॥१९४६॥ अतिस्नेहेन सततं मिथो न ह्यनयोस्ततः । तिष्ठते त्वन्तरायो वै तादात्म्यं चेव जायते ॥ १९४७ ॥ अधुनातनभक्तस्याऽहो सामर्थ्यं कियन्महत् । पश्यन्तु सन्तदासं यो गत्वा बदरिकाश्रमम् ॥ १९४८ ॥ व्योम्ना पुनः समायातो दिव्यगमन उत्तमः । सच्चिदानन्दसंज्ञस्य स्वामिनो निगडस्तथा ॥ १९४९ ॥ तालिका भित्तिका दुर्गः सरित् तादृग्विधान्यपि । नाऽवरोधकराण्यासन्

---

देते हैं वैसे ही यहीं ऐकान्तिकको भी पृथ्वीपर दर्शन देते हैं, उनसे बातचीत करते हैं, उन्हें कोई क्रिया न आता हो तो सिखाते हैं, तथा वह भक्त भी कोई बात पूछना हो तो पूछते हैं, इस रीतिसे सत्पुरुषको व भगवानको अतिशय साधर्म्यपना है, जैसे अति स्नेहवाले दो मित्र हों वे परस्पर किसी प्रकारका अन्तराय रखते नहीं हैं, वैसे श्रीहरिजी महाराज भी वैसे एकान्तिक भक्तमें कोई भी अन्तराय रखते नहीं हैं, वह भक्त भी अति स्नेहसे भगवानमें लग्न रहता है, अतः उनमें किसी प्रकारका अन्तराय रहता नहीं है। और आजके भक्तके सामर्थ्य तो देखिए— आकाशमार्गसे सन्तदासजी बद्रिकाश्रममें हो आये, सच्चिदानन्द स्वामीको बेडी ताला भीत नदी किल्ला आदि कोई आवरण बाधा

सर्वथाऽवरणानि न ॥ १९५० ॥ एवं वै रत्नभक्तस्य भित्तिका तालिका तथा । शृंखला नाऽवरोधं वै कर्तुं शक्तास्तदाऽभवन् ॥ १९५१ ॥ त्वष्टुर्विश्रामभक्तस्य संकल्पेन पिपीलिकाः । लक्षशो दिव्यरूपाणि धृत्वा भूत्वा विमानगाः ॥ १९५२ ॥ परमेशाऽक्षरं धाम ययुश्चैवमनेकधा । वार्ताः सन्त्यत्र सत्संगे चमत्कारादिसंभृताः ॥ २५५ ॥ १९५३ ॥ अथ जीवाः समस्ता ये समास्ते विषमाः किमु ? । महान्तश्चाऽमहान्तो वा ? स्वामी प्राह तदुत्तरम् ॥ १९५४ ॥ जीवाः सर्वेऽणवः सन्ति ज्ञानवत्त्वेन ते समाः । यथा यथा च ते श्रीजीमहाराजस्य चोत्तमम् ॥ १९५५ ॥ महिमानं प्रजानीयुर्धर्मज्ञानादिकानि च । साधनानि दृढान्येव कुर्युर्नित्यं तथा तथा ॥ १९५६ ॥ प्रतापैश्वर्यसामर्थ्यसिद्धितेजांसि पूर्वतः । अधिकान्याप्नुवन्त्येव वर्धन्ते सद्गुणा अपि ॥ १९५७ ॥ गुणैश्वर्यादिभिः श्रैष्ठ्यं जीवानां संप्रजायते । वार्तेयं हरिणा प्रोक्ता मुक्तभेदाभिबोधके ॥ १९५८ ॥ सारंगपुरसंजाते निजीयवचनामृते

---

डाल सका नहीं, तथा रतनाभक्तको भी ताला भीत आवरण कर सके नहीं, तथा वशरामभक्त बढ़ईके संकल्पसे तो लाखों चिऊंटीयाँ दिव्यरूप धारण करके दिव्यविमान में बैठेके परमेश्वरके धाममें चली गयीं, ऐसी अनेक प्रकारकी बातें इस सत्संग में हैं ॥ २५५ ॥ और जीव सब सरीखे हैं कि छोटे बड़े हैं ?, इस प्रश्नका उत्तर स्वामीजीने किया कि—सभी जीव अणुरूप प्रकाशमान सच्चिदानन्द तो सरीखे हैं, मगर ज्ञान कमबेशी होनेसे छोटे बड़े उपचारमात्र व्यवहारमें कहे जाते हैं, ज्ञानवत्तापनारूप साधर्म्य सबमें है, जैसे जैसे परब्रह्म श्रीजीमहाराजकी महिमा समझता जाता है तथा धर्म ज्ञान आदि साधन दृढ़ होते जाते हैं वैसे वैसे प्रताप ऐश्वर्य शक्ति आदि सभी बढ़ते जाते हैं इनसे वह भक्त बड़ा कहाता है, यह बात श्रीजीमहाराजने सारंग-

॥ [२५६] ॥ अथापि हरिभक्तानां सर्वेषां च सतामपि ॥ १९५९ ॥ उपासना च भजनं स्मरणादि समं हरेः । अप्येतानि कथं न्यूनाधिकान्यपि भवन्ति नु ? ॥ १९६० ॥ स्वाम्युत्तरं जगादाऽत्र यथा क्षेत्रे तु कर्षुकः । बीजानि वपते तेभ्यो जायन्ते तारतम्यतः ॥ १९६१ ॥ गुल्मकाण्डाश्च सस्यानि न्यूनाधिकतया यतः । खाद्यभूभेदतश्चेति तथेदं संगतस्त्विह ॥ १९६२ ॥ साधनेभ्यो विभिन्नेभ्यः श्रद्धया भिन्नयाऽपि च । उपासनाप्रभेदेन हरेर्भक्तेश्च भेदतः ॥ १९६३ ॥ भक्तानां तारतम्यं वै न्यूनताऽधिकतात्मकम् ॥ [२५७] ॥ अथ पृथ्व्यां प्रचलन्तः पद्घातेन पतन्ति वै ॥ १९६४ ॥ किन्तु व्योमगमाः केन कारणेन पतन्ति नु ? । व्योमगा हि समाधिस्था भक्ताः पश्यन्ति चाक्षरे ॥ १९६५ ॥ दिव्यतेजःप्रकाशाढ्यान् मुक्तान्, पतन्ति ते कथम् । सत्संगादुत्तरं स्वामी प्राह—तत्पतनं न हि ॥ १९६६ ॥ किन्तु श्रीहरिभक्तानां योगभ्रष्टत्वमेव तत् । पुनः सत्संगमासाद्य प्रयान्ति परमां गतिम् ॥१९६७॥ पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते । न हि कल्याणकृत्कश्चिदुर्गतिं तात गच्छति ॥ १९६८ ॥ प्राप्य पुण्यकृताँल्लोकानुषित्वा

---

पुरके मुक्तभेदके वचनामृतमें भी कहा है ॥ [२५६] ॥ और सभी सन्त व हरिभक्तोंको उपासना भजन स्मरण आदि सरीखे हैं तो भी छोटे बड़े क्यों हो जाते हैं ?, इस प्रश्नका उत्तर स्वामीजीने किया कि—जैसे खेतमें खेतीकार बीज बोते हैं, मगर पृथ्वीमें भिन्नपना होने से पौधे छोटे बड़े हो जाते हैं, वहाँ खात या धराका भेदभाव कारण है, वैसे हरिभक्तको भी संग साधन श्रद्धा उपासना तथा श्रीहरिजीकी श्रवणादि भक्ति इत्यादिमें जितना फरक रहता है उतना हरिभक्तोंमें छोटापन बड़ापन रहता है ॥ [२५७] ॥ और पृथ्वीपर चलनेवालेको तो गिरनेका होताही है, मगर आकाशमार्गसे चलनेवाले किस कारणसे गिरते होंगे ?, आकाश-

शाश्वतीः समाः। शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ १९६९ ॥ इत्युक्तो हरिणा चापि गीतायां पतितो न सः। अथ यावन्न वै जातस्त्वैकान्तिक सुभक्तराट् ॥ १९७० ॥ तावत्तस्येन्द्रियाद्यन्तःकरणादिस्वरूपिणी। माया सम्पीडयत्येनं न त्वैकान्तिकतास्थितिम्, ॥ १९७१ ॥ ऐकान्तिकं हरेर्भक्तं माया तु भजने हरेः। साहाय्यं विदधात्येव यथा लोकेऽपि सर्वथा ॥ १९७२ ॥ गुणबुद्धियुतं सत्संगिनं चान्यः कुसंगवान्। मज्जयत्येव मायायां कुसंगे पातयत्यपि ॥ १९७३ ॥ स्वपक्षे नामयत्येव न तु सत्संगिनं दृढम्। सत्संगिनोऽतिशूरस्य कुसंगी तु प्रसादनम् ॥ १९७४ ॥ प्रसादाऽनुशयित्वं च समाचरति सर्वथा। एवं श्रीहरिणा प्रोक्तं लोहग्रामवचोमृते ॥ १९७५ ॥ चतुर्दशे हि बलिनः पराभूतिर्न वै क्वचित्

---

मार्गेसे गति करनेवाले तो समाधिवाले योगी भक्त होते हैं, तथा वे सभी हरिभक्तोंको ब्रह्मपुर धाममें स्थित तेजोमय शरीरवालेको देखते हैं, वे क्यों सत्संगमेंसे गिर जाते होंगे ? तब स्वामीजीने कहा—यह वार्ता तो ऐसी ही है कि—जो अतिदृढ़ श्रीजीमहाराजके भक्त न हुए हों वे योगभ्रष्ट होते हैं, इनको गिरे नहीं कहे जाते हैं। यह श्रीमगवद्गीतामें कहा है—हे पार्थ वैसे योगभ्रष्टका यहाँ वा परलोकमें विनाश तो है नहीं, क्योंकि कोई भी कल्याणकरनेवालेकी दुर्गति नहीं होती है, पुण्यप्राप्य उत्तम लोकमें जाके असंख्य युग तक सुखी होके फिर शुद्ध सम्पत्वाले भक्तोंके घर वह योगभ्रष्ट प्रकट होता है, तब मुझे भजके मोक्षमें जाता है। जब तक ऐकान्तिक भक्त नहीं होता है तब तक उसे इन्द्रिय अन्तःकरण रूप माया पीडती है, जब ऐकान्ति होता है तब उस भक्तको माया सहायता देती है, जैसे गुणबुद्धिवाले सत्संगीको कुसंगी डगाते हैं जब नकी पक्का सत्संगी होता है तब तो उसकी खुशामद करते हैं, यह लोयाके वचनामृतमें

॥ २५८* अथ देहो नरकात्मा वर्तते तस्य सेवया ॥ १९७६ ॥ पूजासेवादिभिः किं स्यात् फलं ?, तत्रोत्तरं त्विदम्। स्वाम्याह रागनाशार्थं बोध्यो नैजो मुमुक्षुभिः ॥ १९७७ ॥ देहोऽयं, न सतां देहास्ते तु बोध्या हि निर्गुणाः। निरावरणदिव्याश्च पावनाः पुण्यमूर्तयः ॥ १९७८ ॥ पश्यन्तु सच्चिदानन्दस्वामिदेहस्य नाऽभवन्। रोधकानि निगडानि भित्तिका द्वारशृंखलाः ॥ १९७९ ॥ सतालाककपाटानि सन्तो दिव्यास्ततो मताः। हिमाद्रिः सन्तदासस्य नाऽवरोधकरोऽभवत् ॥ १९८० ॥ एवं विज्ञानदासस्य सतालककपाटके। भित्तयः शृंखलाद्याश्च बभूवुर्न निरोधिकाः ॥ १९८१ ॥ तद्देहा व्योममार्गेणोड्डीय गोलोकधामनि। गत्वा स्नात्वा च विरजानद्यां पीत्वा च तज्जलम् ॥ १९८२ ॥ पुनः पूर्वस्थले भूमौ यत्राऽऽसँस्तत्र चाययुः। अतस्ते ब्रह्मरूपाश्चाऽभवन्नावरणोज्झिताः ॥ १९८३ ॥ श्रीमद्भागवते प्रोक्तं—गुणाऽपाये तु सर्वथा। ब्रह्मश-

---

श्रीजीमहाराजने कहा है ॥ २५८* ॥ और देह तो मल रूप है, इसकी पूजा सेवासे क्या फल होता है ?, इसका उत्तर स्वामीजी ने किया कि—मुमुक्षुको देहके प्रति ऐसी समझ रखना उचित है, मगर अन्दर रहे हुए आत्मा परमात्माकी पूजा करना, सत्पुरुषों के शरीर व भगवान् तो निर्गुण व दिव्य हैं, देखिए, सच्चिदानन्दस्वामीजीके शरीरमें बेडी भीत ताला सिकडी लगाये किवाड आदि कोई आवरण करने वाले नहीं हुए, और सन्तदासजी को भी हिमालय रुक सका नहीं, तथा विज्ञानदासजीको भी ताले दिये किवाड भीत आड़ करनेवाले नहीं हुए, उनके शरीर आकाशमार्गसे उड़कर गोलोकमें पहुँचे व विरज्यानदीमें जलपानादि करके वापस पृथ्वीपर चले आये, अतः वे सभी ब्रह्मरूप थे, इससे आवरण कोई आड़े आये नहीं, श्रीमद्भागवतमें कहा है कि—तीन गुणों की असर मिट जानेसे ब्रह्मशरीरवाले

रीरमेत्येव ब्रह्मसाधर्म्यवानिह ॥ १९८४ ॥ एवंरीत्या तु भजन-स्मरणाभ्यां निरन्तरम् । वृषादीनां प्रपक्वत्वात् ततो ब्रह्मसधर्मताम् ॥ १९८५ ॥ भगवत्समतां प्राप्ता निर्गुणास्ते वचोमृते । हरिणोक्ता—यथा ये षड्लक्षणैः सहिताः सदा ॥ १९८६ ॥ भक्तास्तेषामर्हणाद्यैः परमेशाऽर्हणादिजम् । फलं चाऽवाऽप्यते श्रीजीमहाराजः प्रपूज्यते ॥ १९८७ ॥ तद्द्रोहेण हरेर्द्रोहो जायते खलु सर्वथा । साक्षात्सम्बन्धतो 'यस्य कृतिः श्रद्धा च कर्म च ॥ १९८८ ॥ ज्ञानं स्थानं धनाद्यं च गुणवच्चापि निर्गुणम्, । इत्युक्त्वा 'स्वामिना धर्मादिकसाधनवार्तिकाः ॥ १९८९ ॥ सतां वार्ता असतां च वार्तास्तु बहुधोदिताः ॥ [२५९ *] ॥ अथ स्वामी जगादाऽपि मुक्तबुद्धिं समर्जयेत् ॥ १९९० ॥ मुक्तबुद्धेरभिप्राप्तिः सात्त्विकस्य प्रजायते । सात्त्विको मुक्तबुद्धिं संशिक्षते कथिता तु सा ॥ १९९१ ॥ प्रवृत्तिं च निवृत्तिं च कार्याऽकार्ये भयाऽभये । बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥ [२६० *] ॥

---

हो जाते हैं । उसी प्रकार भजन स्मरण तथा धर्मादि साधनोंकी पक्वताद्वारा भगवान्के साधर्म्यपनेको पाये हुए वे निर्गुण ही हैं, श्रीजीमहाराजने वचनामृतमें कहा है कि—इन लक्षणोंसे युक्त जो भक्त उसे पूजनेसे परमेश्वरका पूजन होता है, उसका द्रोह करनेसे श्रीहरिजीका द्रोह होता है, क्योंकि—साक्षात् श्रीहरिके सम्बन्धवाले उन सन्तोंके कर्तापना श्रद्धा कर्म ज्ञान स्थान द्रव्य शरीर इन्द्रिय आदि सब सगुणसे दिखनेपर भी निर्गुण ही हैं ऐसे समझना, इस पर धर्म आदि चार साधन तथा सन्त असन्तकी बहुत वार्ता कहा ॥ [२५९ *] ॥ और स्वामीजीने बात कहा कि—मुक्तबुद्धि सीखना, जो सत्त्वगुणी हो वह मुक्त-बुद्धि सीखता है, जो प्रवृत्ति व निवृत्ति कार्य व अकार्य भय व अभय बन्ध व मोक्ष आदिको पहचानता है उसकी बुद्धि सात्त्विक

॥ १९९२ ॥ अथैकदिवसे स्वामी वार्तां चक्रे सुशुद्धिदाम् । इन्द्रियाऽन्तःकरणेषु कारणे चापि वर्ष्मणि ॥ १९९३ ॥ ध्यानं कुर्मो वयं सर्वे किन्तु शुद्धिर्न जायते । शुद्धिस्तु स्यात् सदसतोर्विचारेण वपुस्त्रयात् ॥ १९९४ ॥ पृथकस्थितिं दृढां कृत्वा जीवे ध्यानाद्धरेः खलु । एवं शुद्धो भवेदात्मा धार्मिणोक्तं वचोमृते ॥ १९९५ ॥ स्नानप्रक्षालने कृत्वा ततः पूजां समाचरेत् । यथा वा धनवान् श्रेष्ठी नित्यमन्नजलार्पणम् ॥ १९९६ ॥ भवेद्यत्र तथारूपं करोत्येव सदाव्रतम् । वंशपरम्पराप्राप्तपीठिकाजीविकात्मकम् ॥ १९९७ ॥ तथा श्रीजीमहाराजः कल्याणात्मसदाव्रतम् । शाश्वतीपीठिकारूपं समस्थापयदुत्तमम् ॥ १९९८ ॥ यस्तु धर्मे दृढश्चास्ते दृढविश्वासवान् सदा । सत्सु पुंस्वेव वै तस्य प्रारब्धं कठिनं त्वपि ॥ १९९९ ॥ विनश्यत्येव तूर्णं वा शुभं तत्परिवर्तते ।[२६१]। ॥ अथाऽऽस्ते किंविधया श्रीपुरुषोत्तममाधवः ॥ २००० ॥ अक्षरे मूलपुरुषे प्रधानपुरुषे तथा । वैराजादिषु सर्वेषु साक्षिरूपेण वा कथम् ॥ २००१ ॥ अत्रोत्तरं यथा—

---

कही है ॥[२६०]॥ और एक दिन स्वामीजीने वार्ता कहा कि—इन्द्रियोंमें अन्तःकरणमें व कारणदेहमें रह कर ही सभी लोग ध्यान करते हैं, किन्तु सत् असत्का विचार करके तीन शरीरोंसे पृथक् होके जीवात्मामें ध्यान अगर करें तो शुद्ध हो जावें, श्रीहरिजीने वचनामृतमें कहा है कि—नहा धो के पूजा करना, तथा जैसे साहूकार अन्न जलके दानार्थ सदाव्रतकी पीढ़ी कर जाते हैं, वैसे श्रीजीमहाराज भी कल्याणरूप सदाव्रतकी पीढ़ी कर गये हैं । और जो धर्ममें दृढ़ वर्तता हो व सत्पुरुषका अति दृढ़ विश्वास रखता हो उसे चाहे जैसे कठिन प्रारब्ध आवे तो भी वे हट जाते हैं ।[२६१]। ॥ और श्रीपुरुषोत्तम भगवान् स्वयं अक्षरमें मूलपुरुषमें प्रधानपुरुषमें तथा वैराजादि सभीमें साक्षीरूप

यद्वदाज्ञाऽस्त्याचार्यदेशिके । श्रीहरेश्चापि यद्वचाऽऽचार्योऽऽज्ञाऽस्ति तु साधुषु ॥ २००२ ॥ साधूनामपि सन्त्याज्ञाः स्वस्वमण्डलसाधुषु । एवमाज्ञाकरश्चास्तेऽक्षराद्येषु हरिः स्वयम् ॥२००३॥ एतेषामन्तरात्मैवं नित्यप्रत्यक्षदृष्टिमान् । सर्ववृत्तान्तविज्ञाता साक्षित्वेनाऽपि राजते ॥ २००४ ॥ आश्रयाणां तारतम्यं चैषां जानाति वै तु सः । नाऽन्यो ज्ञाता कोऽपि चाऽस्ति कोट्युपायपरोऽपि सन् ॥ २६२ ॥ २००५ ॥ अथ काले च कर्मादौ विश्वासः कर्तृतापरः । महतामृषिवर्याणां वर्तते श्रेष्ठधीमताम् ॥ २००६ ॥ केषाञ्चित् विदुषां त्वाधुनिकानां स च नास्त्यपि । नास्तिकाऽऽभास्तु ते सन्ति, ये तु भक्ता हरेर्दृढाः ॥ २००७ ॥ मन्वते ते महाराजं कर्तारं जगतां परम् । भगवन्तं हि पुरुषोत्तमं नाऽन्यं तु कञ्चन ॥ २६३ ॥ २००८ ॥ अथ निष्ठा च महिमा भिन्नौ वा भेदवर्जितौ ? । स्वाम्युत्तरं जगादाऽस्य भिन्नौ तौ स्तः स्वरूपतः

---

से कैसे रहे हैं ?, इस प्रश्नका उत्तर यह है कि–जैसे श्रीजीमहाजकी आज्ञा आचार्यजो महाराज ऊपर है तथा आचार्यकी आज्ञा बड़े सन्तके उपर होती है, तथा सन्तकी आज्ञा मण्डलके सन्तों पर होती है, इसी प्रकार आज्ञाद्वारा रहे हैं, इसमें जैसा तारतम्यपना है इसे श्रीजीमहाराज जानते हैं, या जिसके पर उनकी प्रसन्नता होती है वैसे बड़े सन्त ही जानते हैं, दूसरे तो कोटि उपाय करे तो भी नहीं जान सकते हैं ॥ २६२ ॥ और काल कर्मादिमें जो कर्तापनेका विश्वास सो तो किसी ऋषियोंको होता है, और कई आधुनिक पढ़े लिखे को तो वह भी नहीं है वे तो नास्तिक समान ही है, और जो श्रीजीमहाराज के भक्त हैं वे तो श्रीपुरुषोत्तमभगवान्को ही जगत्के कर्ता मानते हैं, अन्य किसीको नहीं मानते हैं ॥ २६३ ॥ और निष्ठा तथा महिमामें कितना फरक है ? इस प्रश्नका उत्तर स्वामीजीने किया कि—निष्ठा तो इसे कहते हैं

॥ २००९ ॥ भक्तात्मनो हरौ त्वेकान्ततः स्थैर्यं हि निष्ठिका । हरेः सर्वोपरित्वं तु माहात्म्यं परिकीर्त्यते ॥ २०१० ॥ निष्ठा ज्ञानेन भवते साऽन्यस्मिन् गतिरोधना । इन्द्रियाऽन्तःकरणानां जिज्ञासानां च सर्वथा ॥ २०११ ॥ यथैकस्मिन् हरौ धर्मपुत्रे श्रीपुरुषोत्तमे । सर्वान्तर्यामिता सर्वकर्तृता विद्यते परा ॥ २०१२ ॥ सर्वाधारत्वमेवापि सर्वप्रेरकताऽस्ति च नाऽन्यत्रेति स्वहृदये सर्वाऽन्तःकरणेष्वपि ॥ २०१३ ॥ नैरन्तर्येण दृढतावर्तनं स्वस्थितेरिति । नाऽन्यत्र गमनं चेति विरामो निष्ठिका मता ॥ २०१४ ॥ माहात्म्यं तु महत्ताया विज्ञानं ज्ञातरि प्रभोः । जायते लीयते चैवं भक्ते स्थैर्यविवर्जितम् ॥ २०१५ ॥ अस्तीति तस्य वार्तानां मननश्रवणादिभिः । निदिध्यासनकाऽभ्यासैर्महिमा स्थिरतां व्रजेत् ॥ २०१६ ॥ साक्षात्कारः फलं तस्य सम्पद्येत कृपाकणात् । यथा श्लोकः कीर्तनं वा रटितं मुखपाठतः ॥ २०१७ ॥ तन्मुहुर्वत्सरे मासे षण्मासेष्वपि संस्मरेत् । वदेच्च मुखपाठेन वार्तायां प्रवदेच्च वा ॥ २०१८ ॥ तदा तत्पक्वभावं न त्यजत्येव तथेतिवत् । २६४ । ॥ अथैकान्तिकभक्तस्य वृत्तिषु भगवान् स्वयम् ॥ २०१९ ॥ तिष्ठतीति

---

कि—सर्वोपरिपनेकी समझ हो, जैसे कि—एक श्रीपुरुषोत्तममें ही सर्वान्तर्यामीपना सर्वकर्तापना सर्वाधारपना तथा सर्वप्रेरकपना रहे हैं ऐसी अन्तरमें दृढ़ता निरन्तर बर्ते यह निष्ठा कहाती है और महिमा माने महत्ता, ऐसी महिमाका ज्ञान तो आता भी है व जाता भी है, यदि महत्ताकी बातोंका श्रवण मनन व निदिध्यासन निरन्तर किया करे तो महिमा निरन्तर टिकती है, इसका साक्षात्कार भी होने लगता है, जैसे कोई श्लोक या कीर्तन मुखपाठ कण्ठस्थ किया हो उसे छ मास या वर्ष पर्यन्त खटक रखके बात बातमें उच्चारणमें लाया करे तथा याद किया करे तो पक्का होता है वैसे महिमाकी समझ पक्की होती है ॥ २६४ ॥ और

तदा तादृग्भक्तस्यापि हि वर्तनम्। कीदृग्विधं भवेन्नित्यमस्योत्तर-मुवाच च ॥ २०२० ॥ तथाविधस्य भक्तस्य क्रिया हर्यर्थमेव हि। यद्वाऽऽचार्यकृते सर्वा मन्दिरार्थाश्च वा तथा ॥ २०२१ ॥ भवेयुश्च सतामर्थे न स्वार्थास्तु कदाचन। ईदृशानां तु भक्तानां गृहस्थानामपीति च ॥ २०२२ ॥ प्रसंगमजरं पाशमात्मनः कवयो विदुः। स एव साधुषु कृतो मोक्षद्वारमपावृतम् ॥ २०२३ ॥ एवं केवल-सत्संगाद्यर्थं वै ममता भवेत् ॥ २६५ ॥ अथाऽद्य त्वक्षरमुक्ताः कथाः श्रोतुं समुत्सुकाः ॥ २०२४ ॥ समायान्त्यत्र सदसि वार्ताः श्रोतुं च वै सताम्। कोऽयमेषो महानत्र विशेषो विद्यते ननु? ॥ २०२५ ॥ अस्य स्वामी समाधानं चक्रे यत् पूर्वतोऽधुना। ऐश्वर्याणां हि वैशेष्यं वर्तते ज्ञायतेऽपि च ॥ २०२६ ॥ रामानुजा-दिभिर्यत्तु पुरुषोत्तमरूपणम्। कृतं तत् संप्रशिक्ष्यैव कृतं चेति हि बुध्यते ॥ २०२७ ॥ कारिता हरिणा ग्रन्था ये ये तत्र तु सर्वथा। चमत्कारोपासनादि सर्वोपरि सुवर्णितम् ॥ २०२८ ॥

---

ऐकान्तिक भक्तोंकी वृत्तियोंमें भगवान् रहे हैं, वैसे भक्तोंके बर्ताव किस प्रकारके होते होंगे, इस प्रश्नका उत्तर यह है कि—वैसे भक्तकी सभी क्रिया श्रीहरिके लिये मन्दिरके लिये आचार्यमहाराजके लिये व गुरुके लिये होती है, अपने स्वार्थके लिये नहीं होती है, और वैसे गृहस्थ हरिभक्त को जो स्त्रीधनादिका अजर पाशरूप निजमें प्रसंग लगा है। वही प्रसंग साधुपुरुषोंमें कर लेनेसे मोक्षद्वार खुल जाता है, इस कथनके अनुसार सत्संगमें ही ममता रहती है ॥ २६५ ॥ और आज तो अक्षरके मुक्त भी कथा वार्ता सुनने आते हैं सो ऐसा यहाँ कौनसा विशेष है, इस जिज्ञासाका उत्तर स्वामीजीने दिया कि—प्राचीनोंसे आजके प्रभुमें व सन्तोंमें ऐश्वर्योंका विशेषपना बहुत जनाता है, और रामानुजाचार्य आदिने पुरुषोत्तमका निरूपण किया है मगर

तेभ्यः प्रशिक्ष्य वै चाऽन्यैः कृता इत्यनुमीयते । पूर्वेभ्यः परमुक्तेभ्यो दिव्येभ्यः सम्प्रशिक्ष्य वै ॥ २०२९ ॥ पूर्वैः कृता निजा ग्रन्थाः पुरुषोत्तमताऽन्विताः । अधुनातनकविभिश्चापि तद्वद्विनिर्मिताः ॥ २०३० ॥ यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः । पुरुषेणाऽऽत्मभूतेन वीर्यमाधत्त वीर्यवान् ॥ २०३१ ॥ एवंविधानि काव्यानि पूर्वेषां सन्ति सर्वथा । वर्तमाने हरेरैश्वर्याणि सर्वोत्तराणि हि ॥ २०३२ ॥ अत्यन्तेन प्रसन्त्येव वर्णयामः कतीनि वै । सर्वशास्त्रगताः सर्वे सिद्धान्ता अवलोकिताः ॥ २०३३ ॥ किन्तु श्रीजीमहाराजः श्रीहरिः पुरुषोत्तमः । यान् सिद्धान्तान् प्राजगाद सर्वमूर्धन्यसंस्थितान् ॥ २०३४ ॥ न कोऽप्याहेति वा कोऽपि वक्षत्यपि न सर्वथा । न वा श्रीहरितुल्योऽपि कापि कोऽपि भविष्यति ।[२६६] । ॥ २०३५ ॥ एकदा स्वामिना सङ्गापयित्वेदं तु कीर्तनम् । 'एकां वार्तां सुश्रृण्वन्तु व्रजवासिजना मुदा ॥ २०३६ ॥ एवं जगाद पुरुषोत्तमः प्रीत्येति' कीर्तनम् । श्रुत्वा

---

मालूम पड़ता है कि उन्होंने कहीं से सीखके ही निरूपण किया हो वैसा जनाता है, और श्रीजीमहाराजने रचवाये जो ग्रन्थ तथा दूसरे कवियोंके जो ग्रन्थ इन्हें देखते हैं तो मालूम होता है कि कवियोंने सीख सीखके बनाये हुए हैं कि क्या ?, ऐसे जनाता है, क्योंकि कवियोंने लिखा है कि—जो त्रिलोकिमें प्रवेश करके धारण पोषण करता है वह ईश्वर है, तथा अपने आत्मीय पुरुषद्वारा वीर्य देते भये, ऐसे काव्य कवियोंके हैं । और वर्तमान समयमें तो ऐश्वर्य भी बहुत विलक्षण हैं, सो कितने वर्णन कर बतावें, सर्वशास्त्रोंके सिद्धान्त देख लिये, मगर श्रीपूर्ण पुरुषोत्तम श्रीहरिजीमहाराजके समान तो कभी किसीके सिद्धान्त या कोई भी हो सकेंगे नहीं ॥ [२६६] ॥ और एक दिन स्वामीजीने—"एक बात सुनो बृजवासी रे पुरुषोत्तम बोले प्रीतम"

वार्ता कृता तत्राऽऽकाशस्थानीयमक्षरम् ॥२०३७॥ अस्त्यन्धकार—संस्थाना माया वै त्रिगुणात्मिका। अभ्रस्थानीय एवास्ति महावैराजपूरुषः ॥ २०३८ ॥ पक्षिस्थानीय एवास्ति क्षुद्रो वैराज इत्यपि। विद्युत्स्थानाश्च सन्त्येवाऽक्षरमुक्ता अनन्तशः ॥ २०३९ ॥ सगुणं निर्गुणं चेत्यक्षरं वै भवते सदा। स्वयं श्रीजीमहाराजोऽक्षरे वसति धामनि ॥ २०४० ॥ यथाऽऽकाशे वसत्येव शब्दस्तद्वत्तु धर्मजः। आकाशकारणं शब्दोऽप्याकाशेऽपि च तिष्ठति ॥ २०४१ ॥ कारणं त्वक्षरादीनामक्षरादिषु तिष्ठति। सूक्ष्मे सूक्ष्मं तथा मध्ये मध्यं महति वै महत् ॥ २०४२ ॥ 'माया परैत्यभिमुखं च विलज्जमाना' श्लोकेऽत्र यत् कथितमस्ति तथैव माया। नो तिष्ठते त्वभिमुखं पुरुषोत्तमस्य, तद्वत् सतामपि न तिष्ठति सम्मुखे सा ॥ २०४३ ॥ सा महापुरुषादीनां भोक्तॄणां पार्श्वगाऽस्ति हि। वैराजपुरुषस्यापि प्रधानपुरुषस्य च ॥ २०४४ ॥ मूलपुंसोऽक्षरस्यापि ये भक्तास्ते भवन्ति वै। परतन्त्राश्च, ये भक्ताः पुरुषोत्तमनामिनः ॥ २०४५ ॥ ते तु सर्वे स्वतन्त्रा वै भवन्त्येव सदा स्वतः। ते स्युर्वै यादृशाश्चापि तादृशा अपि निम्नितः

---

यह कीर्तन गवा कर उस पर बात कहा कि—आकाशके स्थानापन्न अक्षर है, व अन्धकारके स्थानापन्न माया है, बदलके स्थानापन्न महावैराट है, पक्षीके स्थानापन्न क्षुद्रविराट है, बिजलीके स्थानापन्न अक्षरकेमुक्त हैं, व सगुण निर्गुण तो अक्षर ही होते हैं, प्रभु तोआकाशमें शब्द की तरह अक्षरमें रह हैं, माया तो लजाती हुई भगवान् से दूर भागती है, श्रीपुरुषोत्तम भगवान् के आगे माया खड़ी ही नहीं रहती है, और महापुरुषादिकके तो पास ही रहती है, और वैराज पुरुषके तथा प्रधान पुरुषके तथा मूलपुरुषके तथा अक्षरके जो भक्त हैं वे सभी परतन्त्र हैं, जो श्रीपुरुषोत्तमके भक्त हैं वे ही स्वतन्त्र हैं, ये जैसे तैसे हों तो भी इन्द्र ब्रह्मा

जलफुव्वारवत्प्रसृतेन्द्रियाऽऽदिसुवृत्तिकाः । पिण्डीकृत्य मुहुः स्वस्मिन् यदा लीनीकरोतिहि ॥ २०५६ ॥ तदाऽस्याऽतिदृढबन्धरूपं कारणवर्ष्म तु । नाशमेतीति संप्रोच्य वाचयामास सद्गुरुः ॥ २०५७ ॥ वचोमृतत्रयं चाद्यं रहस्यवचनामृतम् । द्वितीयं तु हि सर्वेषां सावधानत्वबोधकम् ॥ २०५८ ॥ तृतीयं स्नानशुद्ध्यूर्ध्वं-पूजाकार्यनिदेशकम् ॥ २६८ ॥ रुचिस्तु श्रीहरेर्या सा समाधिस्थितियोगिनः ॥ २०५९ ॥ भक्तस्य ज्ञानविषया जायते वा न वेति वै ? । अत्र स्वाम्युत्तरं प्राह समाधिस्था द्विधा मताः ॥ २०६० ॥ श्रीहरावैक्यमापन्नाश्चाऽन्ये त्वैक्यविवर्जिताः । ऐक्याप्तानां सदाऽत्यन्तं रुचिर्विज्ञायते क्वचित् ॥ २०६१ ॥ अनैक्यानां रुचिर्विज्ञायते नैव कदाचन । अथाऽन्ये ज्ञानधर्मादौ ये प्राप्ता स्त्वतिपक्वताम् ॥ २०६२ ॥ ऐकान्तिका हरेर्भक्ता हरावैक्यमुपागताः । समाधिरहिताश्चापि जानन्त्येव रुचिं हरेः ॥ २०६३ ॥ कृपा तेषां हरेरस्ति ततो जानन्ति तद्रुचिम् ॥ २६९ ॥ अथ मानयुता यस्य

---

द्वारा जलके फूहारेकी तरह अनेक रूपवाली इन्द्रियाँ वृत्तियोंका बार बार पिण्डीकरण किया करे तब जीवके अति बन्धनरूप कारणशरीरका नाश हो जाता है, इस पर स्वामीजीने तीन वचनामृत बंचवाये, एक ( म० ५० ) रहस्यका, दूसरा (म० ४५) सभीको खबरदार सावधान रहनेका, व तीसरा ( अ० २ ) नहा धोके पूजा करनेका, ॥ २६८ ॥ और समाधिवालेको श्रीजीमहाराजकी मरजी मालूम पड़ती है कि नहीं ?, इस प्रश्न पर स्वामीजी ने कहा कि–श्रीजीमहाराजके साथ जो अतिशय ऐक्यभावको पा जाते हैं उनको कभी कभी मालूम पड़ती है दूसरोंको नहीं, और धर्मज्ञानादि अतिशय परिपक्व जिसको हो ऐसे ऐकान्तिकको तो सदा मालूम पड़ती है ॥ २६९ ॥ और जो मानी प्रकृतिवाला हो तथा मान भी मिलते रहता हो उसका मान कैसे मिटे ?, इसका

प्रकृतिर्मानमाप्यते ॥ २०६४ ॥ येन. तस्य कथं मानाभिधदोष-विनाशनम् ? । अत्रोत्तरं तु वै मानी सततं तु विचारयेत् ॥२०६५॥ वैराजस्य प्रधानाधिपूरुषस्य समर्थताम् । मूलपूरुषसामर्थ्यं मुहुस्त्वालोचयेत्ततः ॥ २०६६ ॥ स्वस्मिन्नालोचयेच्चापि-सामर्थ्यं तादृशं मयि । वर्तते वा न वास्त्येव कति वाऽस्ति यतस्त्वहम् ॥ २०६७ ॥ मानं रक्षामि सततं चेत्येवं सद्विचारतः । माननाशो भवेदेवं निर्मूल्यमतिसंभवात् ॥ २०६८ ॥ तद्वच्छ्रीजीमहाराजस्यापि साधून्महीयसः । शतानन्दमुनिं चापि स्वरूपानन्दयोगिनम् ॥ २०६९ ॥ मुक्तानन्दस्वामिनं च भक्तं पर्वतसंज्ञकम् । स्मृत्वा तेषां च सामर्थ्यं समालोच्य तदुत्तरम् ॥ २०७० ॥ स्वस्मिन्नालोचयेत् तच्च कत्यंशं मयि वर्तते । इत्यालोचनतः स्वस्य क्षुद्रसामर्थ्यबोधतः ॥ २०७१ ॥ तन्मानं संगलत्येव लीयते नाऽत्र संशयः ॥ २७० ॥ अथ श्रीजीमहाराजमाहात्म्यस्य सुवार्तिकाम्

---

उत्तर यह है कि—वैराजपुरुष तथा प्रधानपुरुष तथा मूलपुरुषके सामर्थ्य को देखे विचारे तलाश भी करे कि उनके आगे मेरा सामर्थ्य कितना है ?, जिससे मैं मान रखता हूँ, ऐसे विचारनेसे मान मिट जाता है, तथा श्रीजीमहाराजके बड़े-बड़े सन्त शतानन्दस्वामी स्वरूपानन्दस्वामी मुक्तानन्दस्वामी तथा हरिभक्त पर्वतभाई आदिके समान सामर्थ्य मेरेमें कितना है ?, ऐसे विचारनेसे मान रहताही नहीं है ॥ २७० ॥ और श्रीजीमहाराजकी महिमाकी तथा जीवात्माके स्वरूपकी बात समझनेवालेको भी स्वभाव नहीं मिटता है । इसका क्या कारन होगा ?, इसका उत्तर यह है कि—सो तो श्रीहरिजीकी महिमा तथा स्वरूपका बारबार श्रवणमननादिद्वारा स्वभाव मिटानेका यत्न नहीं करता है इससे नहीं मिटता है अगर यत्न करे तो जरूर मिट जाय, इस पर सहज प्रकृति मिटानेका व शत्रुभावका

॥ २०७२ ॥ जीवस्वरूपवार्तां च जानन् नैजस्वभावकान् । नैव मुञ्चति, को हेतुः स्वभावाऽनाशनेऽत्र वै ? ॥ २०७३ ॥ अत्रोत्तरं तु नाऽस्याऽस्त्याग्रहस्तेषां विमोचने । यदि श्रीजीमहाराजमहिम्नश्च हरेः प्रभोः ॥ २०७४ ॥ स्वरूपस्याऽतिदिव्यस्याऽभीक्ष्णं श्रवणचिन्तनैः । मननेन निदिध्यासेनाऽपि नैजात्मसत्तया ॥ २०७५ ॥ ब्रह्मभावेन सततं वर्तमानः स्वभावकान् । क्षीणभावान् प्रकुर्याद्वै शनैर्नाशं प्रयान्ति ते ॥ २०७६ ॥ नान्यथा नाशमायान्ति तत्र वै वाचितं तदा । सहजप्रकृतेर्नाशाऽऽवेदकं वचनामृतम् ॥ २०७७ ॥ तथैव शत्रभावादिबोधकं च वचोमृतम् ॥ २७१ ॥ अथ श्रीस्वामिना वार्तोदिता-निष्ठास्वरूपकम् ॥ २०७८ ॥ वेदितुं परिपक्वं, स्वं परीक्षेत यथा स्वयम् । क्वचिन्नौका वारिमध्ये निमज्जेत्तत्र, वा क्वचित् ॥ २०७९ ॥ अरण्ये दैवयोगात्त्वेकलत्वं स्वस्य चापतेत् । यद्वा देहो भवेद् रुग्णस्तत्राति स्वक्रिया अपि ॥ २०८० ॥ स्वयं कर्तुं न शक्तः स्यात्, किन्तु वै तादृशस्थितौ ।

---

वचनामृत बचवाया ॥ २७१ ॥ और स्वामीजीने बात कहा कि—निष्ठाके स्वरूपको जाननेके लिये यह दृष्टान्त है कि—समुद्रमें जहाज डूबता हो, अथवा दैव इच्छासे अरण्यमें अकेले कहीं रह गये व शरीर भी बीमार हो अपनेसे क्रिया करनेका सामर्थ्य भी न हो वैसी स्थितिमें भी नाहिम्मत कायर न हो जाय, तथा श्रीजीमहाराजके अन्तर्यामिपनेका विश्वास भी लेशमात्र गौण हो जाय नहीं, ऐसे भक्तकी पक्व निष्ठा कहाती है, तथा श्रीहरिजी या सत्पुरुष छोटे सन्तके वचनमें वर्तानेको कहे तो भी वर्ते उसमें लेशमात्र भी इधर उधर खिसके नहीं, ऐसे भक्तकी पक्व निष्ठा कहाती है, ऐसी पक्व निष्ठा होनेके लिये ऊपर कथनानुसार दोनों प्रकारकी पक्व निष्ठाकी वार्ता करने सुनने में श्रद्धा रखके बड़े पुरुषका संग किया करना इससे पक्वपना हो जाता है

अशौर्यो न प्रजायेत दीनतां नाऽऽश्रयेत्तथा ॥ २०८१ ॥ श्रीहरौ स्वस्य यश्चान्तर्यामितायाः सुनिश्चयः । तथाविधश्च विश्वासो लेशतोऽपि न गौणताम् ॥ २०८२ ॥ व्रजेदेतादृशस्यैषा निष्ठा पक्वा दृढा मता । तथैव श्रीहरेरग्रे सतामग्रे च सर्वथा ॥ २०८३ ॥ वचने वर्तते यद्वत् तथा सन्तो हरिश्च तम् । वर्तयेत्तु कनिष्ठानां साधूनां वचनेष्वपि ॥ २०८४ ॥ तदा वर्तेततद्वद्वै, न न्यूनं लेशमात्रकम् । दर्शयेन्नच संकोचं पक्का निष्ठाऽस्य साऽपि वै ॥ २०८५॥ एतादृशीं परां पक्कां निष्ठां संशृणुयात् सताम् । मुखेभ्यस्तन्मयीं वार्तां कुर्याच्चापि तथाविधाम् ॥ २०८६ ॥ श्रद्धया परया नित्यं महत्साधुसमागमम् । कुर्याच्चाऽप्यन्वहं तेन सा निष्ठाऽवाप्यते परा ॥ २७२* ॥ २०८७ ॥ अथ कश्चित्प्रभक्तस्तु श्रीमहाराजमेव हि । पश्यत्येव, स्वरूपं स्वंपृथक् पश्यति नैव च ॥ २०८८ ॥ किमत्र कारणं स्याच्चेदस्य सद्गुरुरुत्तरम् । यज्जगाद—स भक्तो वै यदा साधनकालिकः ॥ २०८९ ॥ साधनादिदशापन्नस्तदाऽऽरंभत एव चेत् । जीवेशपरमेशादिस्वरूपाणां पृथक् पृथक् ॥ २०९० ॥ श्रवणं मननं चापि निदिध्यासनमित्यपि । कृतवान् स्यात् तदा पश्येत् स्वरूपाणि पृथक् पृथक् ॥ २०९१ ॥ दृढनिष्ठास्थितौ चापि यथाऽभ्यासं विलोकयेत्, केवलश्रीमहाराजस्वरूपश्रवणादिभिः ॥२०९२॥ कृतनिष्ठासमभ्यासो नैव पश्येत् पृथङ् निजम् ॥ २७३* ॥ अथ

---

॥ २७२* ॥ और जो श्रीजीमहाराजको ही देखता है और निजस्वरूपको अलग नहीं देखता है। यह कैसे होता होगा ?, इसका उत्तर स्वामीजीने दिया कि—साधनकालसे ही जो भक्त जीव ईश्वर व परमेश्वरके स्वरूपोंका भिन्न भिन्न श्रवण मनन व निदिध्यासन कर चुका हो तो क्रमशः दृढ़ स्थिति होने पर भी वे भिन्न भासते हैं, नहीं तो एक ही भासते हैं ॥ २७३* ॥ और मानसीपूजामें तथा बाहरसे स्थूल देहद्वारा पूजामें रसना आदि

मानसपूजायां तथा बाह्यप्रपूजने ॥ २०९३ ॥ स्थूलदेहेन पूजादौ रसनादीन्द्रियादिजाः। वृत्तीः कुर्यात् कीदृशीर्वै याः स्युर्दिव्याः फलप्रदाः ॥२०९४॥ स्वाम्युत्तरं जगादाऽत्र प्राङ् मूर्तिं पारमेश्वरीम्। निजाऽग्रे धारयेत्पश्चाच्चक्षुर्जिह्वादिवृत्तिगाम् ॥ २०९५ ॥ तामेव सन्न्यसेदन्तःकरणेऽनु निजात्मनि। निधापयेत्ततः सत्तारूपो भूत्वा मुहुः स्वयम् ॥ २०९६ ॥ आत्मदृष्ट्या तु तन्मूर्तेः सम्मुखं समलोकयेत्। एवमभ्यासमुरुधा कुर्वाणस्येन्द्रियाणि च ॥ २०९७ ॥ वृत्तयश्च मनश्चापि हृदादीनि च सर्वथा। मूर्तिमयानि दिव्यानि प्रजायन्ते ततोऽस्य च ॥ २०९८ ॥ रागादयो विनश्यन्ति पूजाफलगमोऽपि च। अथ वृत्तिस्तु संकल्पविकल्पाख्या हि मानसी ॥२०९९॥ लिंगशरीरनिष्ठा सा वासनाऽऽधायिकाऽऽत्मनि। लिङ्गदेहात्मिका चापि प्रोच्यते सूक्ष्मताऽन्विता ॥ २१०० ॥ अव्यक्ता वासना तज्ज्ञा प्रोच्यते वर्ष्म कारणम्। वासना स्मरण-

---

इन्द्रियोंकी वृत्तियोंको कैसे रखना ?, इसका उत्तर स्वामीजीने किया कि—परमेश्वरकी मूर्तिको आगे धारना, पीछे उसे चक्षु रसना आदिद्वारा अन्तरमें उतारना, पीछे जीवमें उतारना, पीछे सत्तारूप होके उसके सामने देख रहना, वैसे अभ्यास करते करते तमाम राग क्षीण हो जाते हैं और जो संकल्पविकल्प करनेकी वृत्ति है यह मानसवृत्ति है, वह वासनात्मक लिंगदेह-द्वारा उपजती है, इस लिंगदेहका कारण अज्ञानात्मक कारण शरीर है वह अव्यक्त जो मूलमाया इससे हुआ है अतः अव्यक्त रहता है, इसमेंसे वासना बलवती होनसे रागका स्थूल रूप बन जाता है, जैसे देखी वस्तु नेत्रके आगे तैरती है। यह ग्रन्थि मनमें निपजती है वहांसे संकल्प विकल्प उपजता है, ये वृक्ष हैं ये मनुष्य हैं इत्यादि पंक्तियोंको देखनेके बाद नेत्र बींच जाने पर भी मनमें अहंकारमें व बुद्धिमें जाके देखता रहता है,

द्वारा रागं सञ्जनयत्यति ॥ २१०१ ॥ रागेणेन्द्रियतुरगा धावन्ति विषयान्प्रति । तदाऽतिस्फुटता रागस्यापि सञ्जायते तु या ॥ २१०२ ॥ वृत्तीनां स्फुटता चापि जायते विषयान् प्रति । सूक्ष्मवर्त्मस्वरूपं तत् पुष्टमित्यभिधीयते ॥ २१०३ ॥ अतिरागान्वितवृत्तिद्वारेन्द्रियगणोयदा । स्थूलक्रियाः करोत्येव सदा तर्हि तु वर्त्म तत् ॥ २१०४ ॥ स्थूलं भोगार्थमासक्तं, यथा सूक्ष्मं च कारणम् । भोगार्थं संप्रसक्तं वै स्थूलसाहाय्यकं भवत् ॥ २१०५ ॥ यथा संस्कारतां प्राप्ताः स्मर्यन्ते तरुराजयः । संकल्प्यन्ते मनसा ता मानस्यो ग्रन्थयो हि ताः ॥ २१०६ ॥ नेत्राभ्यां ता विलोक्यन्ते नेत्रवृत्तिसमाश्रिताः । ग्राह्यास्ताः स्थूलरूपास्तु क्ष्मायां पादपराजयः ॥ २१०७ ॥ एवं मानवसंघाश्च स्त्रीपुत्राद्यास्तथाविधाः । स्थूलाः सूक्ष्माः कारणाख्याः प्रजायन्ते हि भोगदाः ॥ २१०८ ॥ नेत्रस्फारे स्थूलवस्तुप्रत्यक्षं संप्रजायते । चक्षुष्पिधानवेलायां मानसं दर्शनं हि

---

जीव इससे सुख दुःखके अनुभवरूप भोग मानता है, वैसे ही स्पर्शके संकल्प होने पर वृत्तिको मस्तक तरफ ले जावे तब वे संकल्प मिट जाते हैं, शब्दकी वृत्तिको नेत्र तरफ ले जावे तब श्रोत्रकी वृत्ति कमती हो जाती है, मन हठा लेनेसे वृत्तियाँ निष्फल हो जाती हैं, ये योग कलाएँ हैं । सौभरि ऋषिको अकेली योगकलाएँ आती थीं, ज्ञानकला नहीं आती थी, उसने योगबलसे ही सभी क्रियाएँ की थीं, और भ्रमर जैसे कमलमें स्नेह सहित चिपक जाता है वैसे भगवान्के स्वरूपमें प्रीति सहित जुड जाना चाहिए, कपिलजीने देवदूतीमातासे बात कहा कि—महिमा सहित भक्ति व भक्तिसहित ज्ञान व ज्ञानसहित वैराग्य इत्यादिकी पक्वता होनेसे मोह मिट जाता है, और ज्ञानादिका श्रवण मनन व निदिध्यासन बहुत करते रहना, इससे साक्षात्कार होता है, यह जल्दीसे नहीं होता है, वैसेही वैराग्य सहित सतत किया

तत् ॥ २१०९ ॥ स्पर्शस्याऽपि तथा बोध्यं शब्दादीनां तथा ह्यपि। ता वृत्तीर्मस्तके ब्रह्मरन्ध्रे वा हृदयेऽपि च ॥ २११० ॥ आत्मन्येव निरुन्ध्याच्चेत् संकल्पविलयो भवेत्। श्रोत्रवृत्ति परावृत्य नेत्रयोरावहेत्तु चेत् ॥ २१११ ॥ शब्दवृत्तिर्लयं यायाच्छब्द-भानं भवेन्नहि। एवं योगकलाद्यैः संहरेद् वृत्तं मिथो मुहुः ॥२११२॥ सौभरिर्योगवानासीत् केवलो योगसिद्धिमान्। चक्रे योगबलेनैव पराः सर्वा निजाः क्रियाः ॥ २११३ ॥ स नाऽऽसीत् पूर्णतां प्राप्तो ज्ञानतत्त्वेषु सर्वथा। अतस्तस्य तपोभंगः शफरीदर्शनादभूत् ॥ २११४ ॥ यथा वै भ्रमरः पद्मेऽतिस्नेहेन निरन्तरम्। परिष्वजते तद्वच्छ्रीहरेर्मूर्तौ सदाऽन्वहम् ॥ २११५ ॥ स्वरूपे च हरेः संसक्तव्यं स्नेहेन चाऽपृथक्। अथोक्तं कपिलेनाऽपि क्रमाद् देवहुतीं प्रति ॥ २११६ ॥ महिम्ना सहितां भक्तिं भक्त्या युक्तं तु वेदनम्। ज्ञानयुक्तं च वैराग्यं दृढं पक्वं समर्जयेत् ॥ २११७ ॥ एतेषां खलु दार्ढ्येन मोहः सर्वो विनश्यति। ज्ञानादीनां तु बहुधा श्रवणेन ततः परम् ॥ २११८ ॥ बहुधा मननेनाऽपि निदिध्यासेन सर्वदा। साक्षात्कारफलं स्याद्वै शनैर्नो त्वरया क्वचित् ॥ २११९ ॥ एवमेव सुवैराग्यैर्युक्तः सँश्चेद् यतेत तत्। सिद्ध्यत्येवेति सम्प्रोच्य स्वामी पश्यन् प्रसम्मुखम् ॥ २१२० ॥ हरजिद्भक्तवर्यस्य ततस्तं प्राह वै यथा। भवान् जानात्यंकसंख्यागुणभाजनयोजनम् ॥२१२१॥ तथाऽभ्यासवतोधर्मज्ञानाद्याः सरलाः सदा। प्रजायन्ते, न कठिनाः साक्षात्कारसहायिनः ॥ २७४ ॥ २१२२ ॥ मुक्ता बद्रीनिवासाश्च

---

करे तो सिद्ध होता है, इसके बाद स्वामीजीने हरजी ठक्करके सन्मुख देखके कहा कि—आपको अंक जोड़ना जैसे कठिन नहीं पड़ता है वैसे अभ्याससे धर्मज्ञानादि भी सरल हो जाते हैं ॥ २७४ ॥ और बद्रिकाश्रमके तथा श्वेतद्वीपके मुक्त कैसे वर्तते हैं? इस प्रश्नका उत्तर स्वामीजीने किया कि— बद्रिकाश्रमके

श्वेतद्वीपगतास्तथा । वर्तन्ते नु कथं तत्र, स्वामी प्राहोत्तरं तु यत् ॥ २१२३ ॥ बद्रिकाश्रममुक्तास्तु ज्ञातृभावस्वरूपिणः । भूत्वा साऽन्तःकरणेन्द्रियादीनिप्रजयन्ति हि ॥ २१२४ ॥ श्वेतद्वीपस्य मुक्तास्तु वासुदेवं प्रभुं मुदा । ध्यायन्ति ते निरन्ना वै वर्तन्ते साऽर्थनामिनः ॥ २१२५ ॥ स्थूलसूक्ष्मवपुर्भावः रहिताश्चात्मभावनाः । आत्मसत्तास्वरूपास्ते भूत्वा ध्यात्वा हरिं हृदि ॥ २१२६ ॥ कारणस्यापि देहस्य रागं बीजात्मकं त्वपि । लीनीकुर्वन्ति यत्नेन ततो रागाऽन्नवर्जिताः ॥ २१२७ ॥ निरन्नाः सार्थकाश्चैवं ख्यायन्ते श्वेतिनश्च‌ते । अथ श्रीजीमहाराजस्त्वेकवारं निजान् जनान् ॥ २१२८ ॥ दयया सर्वभक्तान् स्वाऽक्षरं ब्रह्मपुरं प्रति । नयत्येव निजे रूपे प्रीतिं संकारयत्यति ॥ २१२९ ॥ स्वस्वरूपस्य निःसीमं सुखं चालौकिकं बहु । ददात्यथ च ये यत्र योग्यः प्रेषयितुं पुनः ॥ २१३० ॥ तत्र संप्रहिणोत्येतान्, ते भक्तास्तत्र तत्र च । हरेः सुखं स्मरन्तोऽन्यरागं त्यक्त्वाच वै पुनः ॥ २१३१ ॥ श्रीहरेः सन्निधौ ब्रह्मपुरे चायान्ति सर्वथा ॥ २७५ ॥ अथ श्रीजीमहाराजं

---

मुक्त तो जानपनारूप होके इन्द्रियाँ अन्तःकरणको जित लेते हैं, और श्वेतद्वीपके मुक्त तो वासुदेव भगवान्का ध्यान करते हैं तथा निरन्न कहाते हैं, ये दो शरीरको भावनासे रहित वर्तते हैं तथा आत्मसत्तारूप होके भगवान्का ध्यान करके कारण-शरीरके रोगको नष्ट करते हैं, वैसे वे निरन्न कहाते हैं, और श्रीजीमहाराज दया करके एक बार तो सभी हरिभक्तोंको ब्रह्मपुरमें ले जाते हैं तथा निजमूर्तिमें अतिशय प्रीति कराते हैं तथा अपना अलौकिक सुख भी अतिशय देते हैं, पीछे जिनको जहाँ भेजने घटे वहाँ भेज देते हैं, पीछे वे भक्त उस सुख को सँभारते हुए दूसरे रागों को तजके फिरसे श्रीजीमहाराजके पास पहुँचते हैं ॥ २७५ ॥ और श्रीजीमहाराजको सभी भजते हैं मगर जैसे

भजन्ति सर्व एव हि ॥ २१३२ ॥ तं तथापि यथावन्न प्रजानन्ति हरिं प्रभुम्। यथावद्वेदनं चातिदुर्गमं कठिनं यतः ॥ २१३३ ॥ सर्वे सन्तो निजात्मानं जानन्त्यपि तु वर्तनम्। आत्मसत्तास्वरूपेण सर्वेषां कठिनं त्वति ॥ २१३४ ॥ कथं नु वर्तनीयं चेत्? स्वाम्याहैतत्तु सर्गजम्। अर्थजातं च सर्वाणि कार्याण्येतत्क्रियास्तथा ॥ २१३५ ॥ नित्यलयादिनाशाढ्यं ज्ञात्वा स्वप्नसमं मृषा। असत्ये तत्र कुत्रापि प्रीतिं कुर्यान्न सर्वथा ॥ २१३६ ॥ एवमेव सदाऽभ्यासं कुर्याद्यस्तस्य चात्मनि। स्वस्वरूपे स्थितिः स्याच्च वर्तनं चात्मसत्तया ॥ २१३७ ॥ सिद्ध्यत्येवेति वै तत्र स्वस्य दृष्टान्त ईरितः ॥ २७६ ॥ अथ विश्वस्तभक्तेन हरेर्लीलादिचिन्तनम् ॥ २१३८ ॥ कर्तव्यं, बुद्धियुक्तेन गुणानां चिन्तनं हरेः। कर्तव्यं रुक्मिणीश्रीस्तु प्राह भागवते यथा ॥ २१३९ ॥ श्रुत्वा गुणान् भुवनसुन्दर शृण्वतां ते निर्विश्य कर्णविवरैर्हरतोऽङ्गतापम्। रूपं

---

हैं वैसे जानते नहीं हैं, जानना बहुत कठिन है, आत्माको सभी सन्त जानते हैं मगर आत्मारूपसे वर्तना अति कठिन है, तब किसीने पूछा—कैसे बर्तना ?, तब स्वामीजीने कहा—नित्य-प्रलयादिके विचारद्वारा सभी कार्योंको असत्य नाशवन्त व स्वप्नतुल्य जानके कहीं भी प्रीति नहीं रखना, तथा वैसाही ठराव किया करना कि—मैं आत्मा हूँ तब वैसी आत्मरूप स्थिति होती है, तब ऐकान्तिकके संगद्वारा श्रीहरिजी पहचाने जाते हैं। इसपर स्वामीजीने स्वदृष्टान्तसे वार्ता बहुत कहा ॥ २७६ ॥ और विश्वासी भक्त तो श्रीजीमहाराजकी लीलाओंका चिन्तन किया करे, और बुद्धिमान् भक्ततो गुणोंका विचार किया करे, श्रीरुक्मिणीजीने भागवतमें कहा है कि—हे त्रिभुवन सुन्दर ? आपके सद्गुण, सुननेवालेके कानोंमें पैठकर ताप हरते हैं, तथा आपका रूप,-देखनेवालेके नेत्रोंको सभी अर्थलाभ देता है,

दृशां दृशिमतामखिलार्थलाभं त्वय्यच्युताऽऽविशति चित्तमपत्रमं मे ॥ २१४० ॥ अथ बुद्धिः स्वयंचैकं तत्त्वं वै विद्यतेऽपि सा। यैर्यैर्भावैर्भाविता संपद्यते विषयान्विता ॥ २१४१ ॥ तत्तद्विषयिणी भिन्ना प्रोच्यते नैकधा यथा। शास्त्रीया ज्ञानविज्ञानात्मिका सा प्रोच्यते तथा ॥ २१४२ ॥ भिषक्कलाविदां बुद्धिर्भैषज्रीया निगद्यते। लौकिकी सा व्यवहारप्रचुरा प्रोच्यते तथा ॥ २१४३ ॥ सैव सत्संगयोगेनाऽलौकिक्यत्र च जायते। भिन्ना पृथ्वी बिलोर्यादि-काचरूपा यथा तथा ॥ २१४४ ॥ एवं निदर्शनैः स्वामी वार्तिका बहुधा व्यधात् ॥ २७७ ॥ अथ ब्रह्मपुराऽऽवासास्तथा धामान्तर-स्थिताः ॥ २१४५ ॥ मुक्ताः श्रीहरिणा साकं भूतले ये समागताः। ज्ञायन्ते ते कथं? चास्योत्तरं स्वामी व्यधाद्यथा ॥ २१४६ ॥ ब्रह्मधाम्नस्तु ये मुक्तास्ते त्वैकान्तिकलक्षणैः। धर्मज्ञानादिभिर्भक्त-गुणैर्युक्ता भवन्ति हि ॥ २१४७ ॥ तथा वै वर्तनं तेषां परा

वैसे गुण व रूपको सुनकर मेरा चित्त विना रोकटोकसे आपमें प्रविष्ट हो चुका है अतः जरूर पधारिएगा। और बुद्धि तो वही एक ही है, मगर जिस जिस भावसे भावित होती है वैसी कही जाती है, जैसे कि—शास्त्रीयबुद्धि, वैद्यकीयबुद्धि, लौकिकबुद्धि, तथा सत्संगके योगसे दिव्य अलौकिक बुद्धि भी कहाती है। इस पर बिलौरीकाचका दृष्टान्त देके बहुत बात कहा ॥ २७७ ॥ और ब्रह्मपुर आदि धामोंके मुक्त श्रीजीमहाराजके साथ पृथ्वीपर आये हों वे कैसे पहचाने जायँ? इस प्रश्नका उत्तर स्वामीजीने किया कि—जो ब्रह्मपुरके मुक्त हों वे तो धर्म ज्ञानादि जो ऐका-न्तिक भक्तोंके लक्षण इनसे युक्त हों तथा वैसे ही वर्तते हों तथा वार्ता भी वैसी ही करते हों। और जो वैकुण्ठके मुक्त आये हों वे तो धर्ममें प्रधानपनेसे बर्तते हों अन्य सभीमें गौणपने रहते हों। और जो गोलोकके मुक्त आये हों वे तो भक्तिमें प्रधानपने

वार्तोऽपि तन्मयी । भवत्येवेति ते ज्ञेया मुक्ता ब्रह्मपुराऽऽगताः ॥ २१४८ ॥ वैकुण्ठस्य तु मुक्ता ये तेषु धर्मः प्रधानतः । वर्तमानो भवेच्चाऽन्ये गुणाः स्युर्गौणतान्विताः ॥ २१४९ ॥ गोलोकस्य तु मुक्तेषु भक्तिर्मुख्या भवेदिति । अन्ये गौणा गुणाः स्युश्च, ये तु श्वेतीयधामिनः ॥ २१५० ॥ ते त्वात्मसत्तया वर्तमाना ध्यात्वा हरिं प्रभुम् । भवेयुः कारणवर्ष्मभावनाशपरायणाः ॥ २१५१ ॥ बद्रिकाश्रममुक्तास्तु स्थूलसूक्ष्मशरीरयोः । भावनां नाशने यत्नवन्तस्त्यागपरायणाः ॥ २१५२ ॥ स्वर्गलोकस्य ये स्युश्च तेषां कीर्तिप्रधानता । भवेदेवेति, ये पृथ्व्या वर्तन्ते तु मुमुक्षवः ॥ २१५३ ॥ तेषां तु विषयासक्तिः प्रधानाऽपि भवेदिति । एवं परिचयस्तेषां बोध्यस्तत्तत्प्रवृत्तिभिः ॥ २७८ ॥ २१५४ ॥ परमेशः सदाऽऽस्ते सम्पूर्णकामोऽनपेक्षकः । तथापि कथमेवाऽयं वस्तु गृह्णाति चार्पितम् ॥ २१५५ ॥ अत्र बोध्यं नु किं तत्त्वं ?

---

वर्तते हों दूसरोंमें गौण हों और जो श्वेतद्वीपके मुक्त आये हों वे तो आत्मसत्तारूपसे वर्तते हुए श्रीजीका ध्यान करके कारण-शरीरके भावोंको मिटाके वर्तते हों। और जो बद्रिकाश्रमके मुक्त हों वे तो स्थूल सूक्ष्म देहोंके भावोंको मिटाते हुए त्यागमें प्रधानपने बर्तते हों। और जो स्वर्गलोकके मुक्त आये हों वे तो कीर्तिमें प्रधानपने वर्तते हों। और जो आधुनिक हों वे तो विषयासक्तिमें प्रधानपने बर्तते हों । ऐसे पहचाने जाते हैं ॥ २७८ ॥ और परमेश्वर तो पूर्णकाम हैं उन्हें कुछ भी नहीं चाहिए, तो भी ग्रहण करते हैं इसका क्या तात्पर्य होगा ?, इस प्रश्नका उत्तर स्वामीजीने किया कि—परमेश्वर तो जीवोंके कल्याणार्थ अति दयासे मनुष्यरूप हो कर ग्रहण करते हैं, यदि किसी पदार्थको ग्रहण न करे तो हम लोगोंका श्रेयः किसद्वारा हो सके ? अतः भगवान् ऐसा संकल्प कर रखते हैं कि—'मुझे

स्वाम्यस्योत्तरमाह यत् । परमेशो हि जीवानां कल्याणार्थं कृपावशः ॥ २१५६ ॥ भवन्नेव प्रगृह्णाति रूपं मानवमुत्तमम् । तेन मानवरूपेण जीवकल्याणहेतवे ॥ २१५७ ॥ अङ्गीकरोति वस्तूनि भक्तदत्तानि तत्कृपः । अन्यथा स्थूलजीवानां श्रेयः किंद्वारकं भवेत् ॥ २१५८ ॥ अतः संकल्पयतेऽपि परब्रह्म निजार्थकम् । मां क्षुधा च तृषा शैत्यमौष्ण्यं मानववद्भुवि ॥ २१५९ ॥ स्पृशन्त्वित्यप्याह धार्मिः पञ्चालावचनामृते ॥ [*१] ॥ उपायो नाशयितुं को विक्षेपं च लयं तथा ॥ २१६० ॥ रसास्वादं कषायं च चतुरः, सद्गुरुः परम् । तदुत्तरं जगादेदं—हरेर्लीलादिचिन्तनैः ॥ २१६१ ॥ स्वामिनारायणेत्येवंभजनेन च सर्वथा । लयनाशो भवत्येव. मायायां रोधनं लयः ॥ २१६२ ॥ तामसी शून्यता यद्वा लयो विद्यापराभवः । विक्षेपा व्याध्यकर्मण्यतासन्देहप्रमादिताः ॥ २१६३ ॥ आलस्यरागविभ्रान्तिस्थित्यलाभचलात्मताः तन्नाशार्थं हरेर्मूर्तौ कुर्यादभ्यासमास्थितेः ॥ २१६४ ॥ विचारयेच्च माहात्म्यं आत्माऽनात्मविवेकवान् । विवेकेनापि विक्षेपा लयं यान्ति न

---

क्षुधा तृषा शीत उष्ण आदि मनुष्योंकी तरह हो' इससे जीवोंके साथ समानक्रियासे रहकर मोक्ष दूँ, यह बात श्रीहरिजीने पंचालाके वचनामृतमें कही है ॥ [*१] ॥ और लय विक्षेप रसास्वाद व कषाय को मिटानेके कौनसे उपाय हैं ?, इस प्रश्नका उत्तर स्वामीजीने किया कि—लय माने शून्यता, यह तो भगवान्की लीलाके चिन्तनसे तथा स्वामिनारायण नामके भजनसे मिटता है । विक्षेप माने व्याधि प्रमाद आलस्य भ्रान्ति अनवस्थितता विषयाकर्षण आदि, ये तो श्रीजीमहाराजके माहात्म्यके विचारसे तथा आत्मा अनात्माके विचारसे तथा आत्मसत्ताके अभ्याससे मिटते हैं । रसास्वाद तो नियमोंमे यथार्थ वर्तनेसे मिटता है । कषाय माने काम क्रोधादि, ये तो आत्मसत्तारूप

विरागस्तेन जायते। वैराग्येण विना ज्ञानं स्वल्पपि, व सिद्धयति ॥ १८८ ॥ अतो वै तृणामारभ्य स्थावरं जंगमं च यत्। महापूरुषपर्यन्तं सर्वं नाशप्रशालि हि ॥ १८९ ॥ यथावत् तत्स्वरूपाणि लयैर्ज्ञात्वा चतुर्विधैः। नाशयोगीनि निश्चित्य तत्रोदासीन्यतस्ततः ॥ १९० ॥ राजमाने चिदाकाशे किशोरे पुरुषोत्तमे। दिव्यरूपे भगवति स्थापयेन्निजवृत्तिकाः ॥ १९१ ॥ वैराग्यार्थं विजानीयाल्लयं नित्यं यथायथम्। यथा वीर्येण देहोऽयं बीजरूपः प्रवर्तते ॥ १९२ ॥ गर्भे प्रबध्यते तत्र ततश्चात्यभिवर्धते। जायतेऽस्य ततो जन्म बालो युवाऽयमित्यथ ॥ १९३ ॥ वृद्धोऽयं जायते पश्चान् म्रियते प्रलयो ह्ययम्। देहस्य कथितो नित्यस्तथा प्रातः सुभोजने ॥ १९४ ॥ कृतेऽपि क्षुत् सदा सायं पुनरेव हि वर्तते। सायं भुक्तेऽपि सा प्रातः पुनः क्षुत् संप्रवर्तते ॥ १९५ ॥ विषयाणां च भोग्यानां

---

प्रेरकर मायासे संयुक्त किया उससे अनन्त प्रधानपुरुष हुए, एक एक प्रधानपुरुषसे अनन्त महाविष्णु हुए, एक एक महाविष्णुसे अनन्त वैराजपुरुष हुए, तथा अनन्त सृष्टियोंको जानना। अक्षरधाम तथा वहाँके अनन्तकोटि मुक्तोंद्वारा सुसेवित श्रीपुरुषोत्तमनारायण श्रीहरिकृष्ण महाराज विराजित हैं इन्हें जानना, गुण कर्म विभाग भाव अभाव शक्ति सामर्थ्य आदि जानना, इसे ज्ञान कहते हैं। ज्ञानसे राग मिटता है व वैराग्य उपजता है वैराग्य होनेसे ज्ञानमें पुष्टि होती है, प्रथम स्थावर जंगम प्रकृति व पुरुष पर्यन्त सभी तत्त्व समझना, उनके स्वरूपोंको चार प्रकारके प्रलयोंसे नाशवन्त भी यथायोग्य समझके उमसे मन उदास करना, उनसे पर जो सच्चिदानन्द ब्रह्मधाम उसमें सदाविराजमान किशोरमूर्ति जो श्रीपुरुषोत्तम भगवान् उनकी दिव्यमूर्तिमें दिव्यस्वरूपमें निजवृत्तियाँ पहुँचा देना व ठहरा देना। अब वैराग्यका संक्षेपसे रूप कहते हैं,

नित्योऽयं प्रलयो मतः। जायन्ते च म्रियन्ते च जन्तवः पशुपक्षिणः ॥ १९६ ॥ फलपुष्पाणि वृक्षेषूद्भवन्ति विगलन्ति च। ज्वालयन्ति परेऽन्येषां नयन्त्यन्यायतो धनम् ॥ १९७ ॥ पदार्थान् वस्तुजातानि सुतं स्त्रीं भ्रातरं तथा। शत्रवो मारयन्त्येव द्वेषिणोऽपरदेहिनः ॥ १९८ ॥ एवं क्षणे च निमिषे घटिकायां मुहूर्तके। मानवानां च देवानां वेधसोऽपि क्षणादिषु ॥ १९९ ॥ भूत्वा भूत्वा प्रलीयन्तेऽकस्मात् तत्त्वार्थजातयः। सोऽयं नित्यप्रलयोऽस्ति यद्दुःखान्तो न विद्यते ॥ २०० ॥ ज्ञातव्यानि हि सर्वाणि दुःखानि नित्यजानि वै। अथ नैमित्तिकं वच्मि लयं यत्र चतुर्दश ॥ २०१ ॥ मनवश्च महेन्द्राश्च भूत्वा राज्यं निजं निजम्। एकसप्ततिसंख्याकाः साधिकाः संप्रभुज्य च ॥ २०२ ॥ प्रत्येकं तादृशं दीर्घं भुक्त्वा राज्यं चतुर्दश। म्रियन्ते त्वन्तिमे नष्टे रात्रिर्वै वेधसोऽस्ति सा ॥ २०३ ॥ चतुर्युगसहस्रं तद् ब्रह्मणो दिवसो मतः। कल्पोऽस्याऽन्ते प्रलयोऽपि तावान् ब्राह्मी निशा हि सा ॥ २०४ ॥ दश लोका इमे

---

राग तृष्णा भोग्येच्छा वासना आकर्षण अपेक्षा न होना इसका नाम वैराग्य है, सभीका नित्यप्रलय समझना, वीर्यमेंसे देहका होना गर्भमें बढ़ना जन्म लेना पौगंड किशोर युवा वृद्ध होना, मरना आदि सोचना, तथा सायं खाने पर भी सबेरे भूखा होना, पशु पक्षी आदिका उपजना व मरना, वृक्षादिमें फल-फूल लगना व गिरना, कई चिजोंका जलना उठा जाना, भाई पुत्र बापको मार डालना व मरना, यह सभी नित्यका प्रलय है, इसका दुःख सोचना। और नैमित्तिक—प्रलय भी समझना चाहिए—जैसे कि—चौदह मनु लोग एकहत्तर एकहत्तर चतुर्युगीयोंका राज्य करके उतर जाते हैं तब ब्रह्माकी रात्रि आती है, चौदह मनुलोगके समयके बाद सौ वर्षों तक दुष्काल पड़ते हैं इससे मनुष्य पशु पक्षी वृक्ष आदि नष्ट हो जाते हैं नदीयाँ सूख जाती हैं पृथ्वी

तत्र प्रलीयन्ते निशामुखे। चतुर्दशमनोरन्ते दुर्भिक्षं शतवार्षिकम् ॥ २०५ ॥ जायते, मानवाः पक्षिपशवो जन्तवस्तथा। वृक्षवल्लया-दयश्चापि सर्वे नश्यन्ति सर्वथा ॥ २०६ ॥ शुष्यन्ति चापगा दग्धकृष्णकपालिकेव भूः। तिष्ठते च, ततोऽर्का द्वादशोदयमिताः सह ॥ २०७ ॥ स्वस्वयावत्कलापूर्णाः शतवर्षाणि मेदिनीम्। भर्जित्वा ज्वालयित्वा च प्रदग्ध्वा भस्मसात्कृताम् ॥ २०८ ॥ दग्धगोमयपिण्डस्य शाकृतानस्य भस्मभान्। कुर्वन्ति च ततः शेषाऽहीशाननजवह्निराट् ॥ २०९ ॥ ज्वालयित्वा दशलोकान् भस्मीभूतान् करोति हि। ततश्च शतवर्षाणि मेघाः प्रलयकालिनः ॥ २१० ॥ करिशुण्डाभधाराभिः वर्षन्ति द्वादशैव हि। आध्रुवं सलिलान्येषां पूर्यन्ते च तदाऽभितः ॥ २११ ॥ दशलोकस्थिता-श्चेन्द्रचन्द्रवरुणशंकराः। प्रजानां पतयस्तेऽन्ये यमाद्याश्च तथेश्वराः ॥ २१२ ॥ स्वर्गलोकं विहायैव चोर्ध्वलोकान् प्रयान्ति हि। नैमि-

काली ठीकरीकी समान हो जाती है, बारह सूर्य समग्रकलाओंसे पूर्ण होके एक सौ वर्षों तक पृथ्वीको जलाकर कंडेकी राखके समान बना देते हैं, शेषनागके मुखसे निकलता हुआ अग्नि दस लोकको जलाके भस्म कर डालता है, सौ वर्षों तक हाथीका शुण्ड की तरह मोटी धारावाले प्रलयकालके मेघ बरसते हैं, वह जल ध्रुवकी तारा तक भर जाता है, उस समय दस लोकमें रहनेवाले इन्द्र चन्द्र वरुण यम शिव प्रजापति ये सभी महरजन तप आदि लोकमें चले जाते हैं, दिनके समान लम्बी रात बीतने पर प्रातःकालमें फिरसे सृष्टि होती है, यह क्रम ब्रह्माके सौ वर्षतक चला रहता है, बादमें ब्रह्मा भी चौदह भुवनोंवाले ब्रह्माण्डके सहित नष्ट होता है तब ब्रह्माण्डके सभी प्रजापतियोंकी देह नष्ट हो जाती हैं, उनको जीव ब्रह्मामें लीन होती हैं, ब्रह्माकी आत्मा वैराजपुरुषकी नाभिमें लीन होती है यह ब्रह्माके नाशके निमित्त ब्रह्माण्डका

त्तिकः प्रलयोऽयं संशेते यत्र विश्वसृक् ॥ २१३ ॥ आयुष्यरहिता-श्चेन्द्रादयो नश्यन्ति चात्र वै । तज्जीवाः सत्यलोकादौ प्रयान्ति विश्वसृङ्गताः ॥ २१४ ॥ ब्रह्मणि ब्रह्मलोके वा तिष्ठन्ति निजकर्मवत् । अथाऽयं दशलोकानां प्रलयः परिकीर्तितः ॥ २१५ ॥ तथैव वेधस-श्चापि शतवर्षोत्तरं महान् । ब्रह्माण्डस्याऽस्य विलयो नैमित्तक उदाहृतः ॥ २१६ ॥ तदा ब्रह्मा विराण्नारायणनाभौ प्रलीयते । वैराजस्यैकदिवसे सायंकाले पुनस्ततः ॥ २१७ ॥ प्रातर्ब्रह्मा नवीनो वै ब्रह्माण्डं चापि नूतनम् । एवं सृष्टिलयश्चाऽयं नैमित्तिक उदाहृतः ॥ २१८ ॥ एवं त्रिंशद्दिनानां वै मासो वैराजनामिनः । मासाश्च द्वादशाऽब्दं तत्, पञ्चाशद्वत्सरास्तु ते ॥ २१९ ॥ वैराजस्य तु पूर्वार्धं परार्धं तावदित्यपि । वैराजपुरुषस्याऽऽयुः शतवर्षाणि तस्य वै ॥ २२० ॥ उच्यते द्विपरार्धं तच्छतवर्षात्मकं खलु । शतवर्षोत्तरं चापि प्रलयस्तु तृतीयकः ॥२२१ ॥ वैराजस्यापि

---

नाश नैमित्तिक प्रलय कहाता है । ऐसा यह वैराजपुरुष अनन्त-ब्रह्मासहित ब्रह्माण्डोंको उपजाता है तथा लीन करता है, इसके रोम रोममें ब्रह्माण्ड बसे हैं, साढ़े तीन कोटि ऐसे ब्रह्माण्ड एक एक वैराजमें हैं, इस चालू ब्रह्माका तीस दिनका एक मास, बारह मासोंका एक वर्ष, वैसे पचास वर्षोंका पूर्वार्ध और दूसरे पचास वर्षोंका परार्ध, दोनों मिलके सौ वर्ष ब्रह्मा रहता है, यह वैराजका एक दिन हुआ, इस दिनके हिसाबसे मास वर्ष गिनाते हैं वैसे सौ वर्ष वैराज रहते हैं, इस वैराजके प्रतिरोमस्थ ब्रह्माण्डोंमें लयके समयारंभमें सौ वर्ष अनावृष्टि सौ वर्ष द्वादश सूर्योंका तपना संकर्षणके मुखाग्निसे चौदह लोकोंका भस्म होना प्रलय-कालके मेघोंका बरसना जलपूर्ण ब्रह्माण्डमें चौदह लोकोंका डूबना पृथ्वीका कंडेकी राख समान होना आदि बराबर होते हैं, वैराजके शतवर्ष जानेपर तो पृथ्वी व ब्रह्माण्ड गन्धमें लीन होते

भवते तत्त्वानां विलयोऽपि च। महाविष्णोर्लयश्चापि प्रधानेशलयोऽपि च ॥ २२२ ॥ कार्याणां प्रलयात्तेषां कारणानां लयोऽपि च। एवं परम्परया वै मूलमाया विलीयते ॥ २२३ ॥ महापूरुषरूपेऽयं प्रलयः प्राकृतो मतः। यथाहि—द्विपरार्धान्ते वैराजस्य तदा त्विमाः ॥ २२४ ॥ सप्त प्रकृतयः सर्वाः कल्पन्ते प्रलयाय वै। तत्राऽप्यादौ तु वैराजस्यैव रोमादिगर्तगाः ॥ २२५ ॥ सृष्ट्यण्डगोलका वर्तमानाः स्युर्ये च तेषु च। सर्वेष्वसंख्यगोलेषु दुर्भिक्षं शतवार्षिकम् ॥ २२६ ॥ जायते, द्वादशाऽर्काश्च प्रतपन्ति शतं समाः। ततः संकर्षणस्याऽप्याननोत्थाग्निः प्रवर्धते ॥ २२७ ॥ लोकाँश्चतुर्दशान् सर्वाऽण्डस्थान् दग्ध्वा समस्ततः। शाकृतानिकभस्माभान् कुर्वन्त्येव ततः परम् ॥ २२८ ॥ शतवर्षाणि वर्षन्ति मेघाः प्रलयकालिनः। चतुर्दशसु लोकेषु जलमात्रं प्रपूर्यते ॥ २२९ ॥ तदा दग्धमहाकारीषकपिण्डनिभा तु भूः। याऽभूत् सा

---

हैं, गन्ध जलमें लीन होता है, जल रसमें लीन होता है, रस तेजमें लीन होता है तेज रूपमें लीन होता है रूप वायुमें लीन होता है वायु स्पर्शमें लीन होता है स्पर्श आकाशमें लीन होता है आकाश शब्दमें लीन होता है शब्द तामसाहंकारमें लीन होता है तामसाहंकार राजसाहंकारमें लीन होता है राजसाहंकार सात्त्विकाहंकारमें लीन होता है इस प्रकार वैराजतत्त्वों महाविष्णुमें लीन हुए, तब अहंकार महत्तत्त्वमें लीन होता है यहमहाविष्णु प्रधानपुरुषमें लीन हुआ, महत्तत्त्व मूल प्रकृतिमें लीन होता है, मूल प्रकृति पुरुषमें लीन होती है, यह प्राकृत प्रलय कहाता है। इस प्राकृत प्रलयसे जिन सृष्टियोंका निषेध किया, इससे जो ज्ञान उपजता है इससे जीवमेंसे अव्यक्त विषयोंका राग निर्मूल नहीं होता है क्योंकि यह ज्ञान विषयासक्ति मिश्रित है, इस ज्ञानके पात्र जो-जो प्राचीन

द्रवतां प्राप्य सगन्धा लीयते जले ॥ २३० ॥ जलं रसे रसश्चापि तेजसि प्रविलीयते । तेजो रूपे च रूपं च वायौ स्पर्शोऽनिलस्तथा ॥ २३१ ॥ स्पर्शो व्योम्नि च खं शब्दे शब्दः स्वे कारणात्मके । अहंकारे तामसे च तामसो राजसे तथा ॥ २३२ ॥ इन्द्रियाद्या राजसेऽपि लीयन्ते द्रुतमेव हि । राजसश्चेन्द्रियदेवा लीयन्ते सात्त्विके तदा ॥२३३॥ सर्वोऽप्यहं महत्तत्त्वे लीयते च ततः परम् । महत्तत्त्वं प्रधाने च प्रधानं पुरुषेऽपि च ॥ २३४ ॥ प्रधानपुरुषो मूलमायायां प्रकृतौ लयम् । यात्येवेति च माया सा पूरुषे लीयतेऽपि च ॥ २३५ ॥ अयं प्राकृतनामा वै प्रलयः प्रोच्यते महान् । निषिद्धानां पदार्थानां प्राकृतप्रलयेन वै ॥ २३६ ॥ यज्ज्ञानं जायते तेन ज्ञानेनाऽऽत्मनि गर्भगः । विषयाणां स्थितो रागोऽव्यक्तो यः स न नश्यति ॥ २३७ ॥ तज्ज्ञानं प्रोच्यते चाऽत्र विषयासक्तिमिश्रितम् । यतः पूर्वोद्भवानां त्वाचार्याणां महतामपि

---

बड़े आचार्य हुए उनका ज्ञान प्राकृत प्रलय पर्यन्त उनके शास्त्रोंसे मालूम पड़ता है, इससे आगे अधिक नहीं बढ़ा है, इससे वे महापुरुष को ब्रह्म या पुरुषोत्तम जानते वर्णते हैं । और आत्यन्तिकप्रलय तो यह कहता है कि—अनन्त कोटि प्रधान-पुरुष जब महामायामें लीन होते हैं, यह महामाया मूलप्रकृति महापुरुषमें लीन होती है, महापुरुष अपना उस शरीरको अदृश्य करके भागवती तनुरूप मुक्तमूर्ति होकर अक्षर धाममें श्रीभगवान्की सेवामें रहता है, ऐसा जो यह तमाम सृष्टियोंका लय इसका नाम आत्त्यन्तिक-प्रलय कहा गया है, जिसको माया छूट जाय व मुक्तदशा मिल जाय उसको आत्यन्तिक-प्रलय ज्ञानद्वारा प्रलय व मुक्तिस्थिति होती है । इस प्रकार चार प्रलयोंके विचारसे मायिक सभी नाशवन्त जानके अखंड अनादि सत्य अमाप अमितैश्वर्ययुक्त अक्षरधाममें विराजमान अपरिमित अक्षरोंमुक्त-

॥ २३८ ॥ ज्ञानं प्रभासते शास्त्रेष्वाप्राकृतलयाऽवधि । तत ऊर्ध्वं न वै, ते तु जानन्ति पुरुषोत्तमम् ॥ २३९ ॥ महापूरुषमेवाऽतो गतिस्तेषां न चाक्षरे । अथाऽऽत्यन्तिकनामा च प्रलयोऽपि निगद्यते ॥ २४० ॥ प्रधानपुरुषा यत्र लीनाः सा मूलसंज्ञिका । मायाऽपि पूरुषे लीना महापूरुष एव सः ॥ २४१ ॥ देहं विवृत्त्य मायाऽक्तं नित्यां भागवतीं तनुम् । दिव्यां चालम्ब्य भगवत्सेवायां तिष्ठते तदा ॥ २४२ ॥ अयमात्यन्तिको मोक्षस्थितिरूपो लयोऽन्तिमः । *ज्ञानेनाऽऽत्यन्तिकेनेदं त्वात्यन्तिकसुमोक्षणम् ॥ २४३ ॥ यस्य वै जायते तस्याऽऽत्यन्तिकप्रलयोऽस्ति हि । विवेकोपास्तिभक्त्याद्यैश्छित्वा मायादिबन्धनम् ॥ २४४ ॥ ब्रह्मरूपः परंब्रह्मप्राप्तिमान् यः प्रजायते । तस्य ज्ञानादिभिः सोऽयमात्यन्तिकलयो मतः ॥ २४५ ॥ एवं चतुर्लयैः सर्वं ज्ञात्वा नाशाभियोगि च । अखण्डाऽनादिसत्ये चाऽसीम्नि दिव्येऽक्षरे शुभे ॥ २४६ ॥ सर्वैश्वर्ययुते धाम्नि सुमूर्तिः पुरुषोत्तमः । असंख्याऽक्षरमुक्ताऽभिसेवितः संविराजते ॥ २४७ ॥ श्रीहरिश्चापि मुक्ताश्चाऽक्षरं धाम च मूर्तिमत् । विराजन्ते सदा दिव्याः परिणामादिवर्जिताः ॥ २४८ ॥ एवं ज्ञानवतो ज्ञानं देशकालादिभिः क्वचित् । परावर्तेत नैवाऽपि, निराकारं हरिं न च ॥ २४९ ॥ मन्येतापि, सदा दिव्याकारं विद्यात् प्रभुं हरिम् । स एव भगवानत्र दयया

---

द्वारा सुसेवित दिव्यमूर्ति श्रीपुरुषोत्तमनारायणको तथा अक्षरमुक्तों को सदा दिव्य तथा कभी भी नहीं लीन होती हैं आकृतियाँ जिनकी ऐसे समझना, इस समझको किसी भी देशकाल आदि द्वारा कभी भी बदलना नहीं तथा भगवानको निराकार मानना नहीं सदा दिव्य साकार ही समझना, तथा वे ही श्रीपुरुषोत्तमनारायण भगवान् दया करके हम लोगोंके कल्याणार्थ यहाँ पधारे हैं, इन्हें सर्व अवतारोंके अवतारी समझना तथा यह भी समझना

श्रेयसे हि नः ॥ २५० ॥ प्रादुर्भूतोऽस्ति तं ज्ञात्वा त्ववताराऽवतारिणम् । करुणासागरं स्वामिनारायणमधीश्वरम् ॥ २५१ ॥ भजेत, यत्र वै श्रीजीमहाराजो विराजते । तत्राऽस्त्यक्षरमध्यं वै स एवाऽक्षरसंस्थितः ॥ २५२ ॥ महाराजोऽयमेवाऽस्ति भक्तिधर्मसुतो हरिः । अक्षरेण युतश्चात्र राजते सर्वगोचरः ॥ २५३ ॥ एतत् संप्रोच्यते ज्ञानं शुद्धमात्यन्तिकं परम् । ईदृशज्ञानिनस्तु स्यादैश्वर्यं हरिसन्निभम् ॥ २५४ ॥ स्वतन्त्रं न पराधीनं, ज्ञान्येषो दुर्लभो ननु । साधारणेषु लक्षेषु मानवेषु निजाऽऽश्रमम् ॥ २५५ ॥ वर्तमानोऽनुसृत्याऽत्र कश्चिदेको मिलेदिह । तादृशेष्वपि लक्षेषु शास्त्ररीत्या स्वधर्मवान् ॥ २५६ ॥ एक एव मिलेत् तादृङ्लक्षेष्वपि तु देहिषु । मिलेत् सत्संगवानेकः सत्संगिशतकेषु च ॥ २५७ ॥ सत्यसत्संगपक्वः स्यादेकस्तेषां सहस्रके । साधुः स्यादीदृशः कश्चिदेक एव मिलेच्छुभः ॥ २५८ ॥ तादृशानां सतां चापि सहस्रे त्वेक एव वै । मिलेद्धर्मामृतधर्मान्वितस्तेषां सहस्रके

---

कि—जहाँ श्रीपुरुषोत्तमनारायणकी मूर्ति है वहीं अक्षरधामका मध्य है, अतः मायिक सभी निषेध करके तब दिव्य अक्षरधाममें जो श्रीपुरुषोत्तम भगवान् रहे हैं वे ही यहाँ श्रीभक्तिधर्मके पुत्र श्रीजीमहाराज हैं, वे अक्षरधामसहित यहाँ बिराजते हैं, इस ज्ञानको आत्यन्तिकज्ञान कहते हैं। ऐसे ज्ञानवाले के ऐश्वर्य भगवान् की तरह स्वतंत्र होते हैं, ऐसे ज्ञानी बहुत दुर्लभ हैं। साधारण लाखों मनुष्योंमेंसे स्व वर्णाश्रमधर्मवाला एक मिले, वैसे लाख मनुष्योंमेंसे यथार्थ शास्त्रीय धर्मपालक एक मिलें, वैसे लाख मनुष्यों में से सत्संग करनेवाला एक मिले, वैसे हजारन् सत्संगियोंमेंसे परिपक्व सत्संगी एक मिले, वैसे हजारन् पक्व सत्संगीओंमेंसे साधु होने योग्य एक मिले, वैसे हजारनमेंसे एक कोई साधु होता है, वैसे हजारन् साधुओंमेंसे धर्मामृत पालने

॥ २५९ ॥ अखण्डस्मरणाढ्यः श्रीहरेरेको मिलेदपि। तादृक्सहस्रसाधूनां पूर्वोक्तज्ञानवाँस्तथा ॥ २६० ॥ प्रेमलक्षणया भक्त्या युक्तश्चैको मिलेदपि। अतस्तादृशविज्ञप्तिप्राप्तिस्तु कठिना ह्यति ॥ * ॥ २६१ ॥ अथ वै हरजिद्भक्तः पप्रच्छ स्वामिनं, गुरो! कथं ज्ञेयः स पुरुषो यो मायाविजनस्य वै ॥ २६२ ॥ मायायां सर्वथा नाऽऽकृष्यते, स्वामी जगाद तम्। उक्तो विज्ञानिवर्यो यः सर्वथाऽऽकृष्यते न सः ॥ २६३ ॥ तद्भिन्नस्तु बलिष्ठोऽपि मायाविपुरुषस्य वै। आकृष्यते हि मायायां, वच्मि मायाविलक्षणम् ॥ २६४ ॥ स्वयं धर्मं च विज्ञानं भक्तिं वैराग्यमित्यपि। नैव पालयते किन्तु मुमुक्षुभ्यो महाग्रहात् ॥ २६५ ॥ धर्मादीन् दर्शयित्वा चोपदेशादि समाचरेत्। ततः श्रेष्ठसतां पार्श्वे वसन्तं स्थितमेव वा ॥ २६६ ॥ संलग्नं वा जनं तेषां तस्मिन्नवगुणानति। निधाय तं निजे पार्श्वे रक्षेत् पश्चाच्च तं मुहुः ॥ २६७ ॥ उपदिश्य हरेर्भक्तिं भक्तौ दोषान् प्रदर्श्य च। भक्तेस्तं पातयेच्चापि तथा धर्मं

---

वाला एक मिले, वैसे हजारनमेंसे भगवान्को निरन्तर संभारनेवाला एक मिले, वैसे हजारनमेंसे उक्त रीतिका ज्ञानी व प्रेमभक्तिवाला एक मिले, अतः ऐसा ज्ञान प्राप्त होना ही कठिन है ॥ * ॥ और हरजी-ठकरने पूछा कि—मायावी-पुरुषकी मायामें न फँसे ऐसे पुरुषको कैसे पहचानना? तब स्वामीजीने कहा कि—पूर्वोक्त ज्ञानद्वारा आत्यन्तिकप्रलय जिसने सिद्ध किया हो वह मायावी पुरुषकी मायामें नहीं फँसता है, दूसरा तो चाहे जैसा हो मगर मायावी की मायामें फँस जाता है। मायावी पुरुषकी रीतभात इस तरहकी होती है जैसे कि—खुद धर्म ज्ञान वैराग्य भक्ति आदि न करता हो मगर अन्य मुमुक्षुओंको धर्मादि दिखाकर धर्मादिका उपदेश करता हो तथा अच्छे सन्तसे स्नेहवालेको उस सन्तके अवगुण घूसा कर निजके पास ले लेवे तथा भक्तिका

विरागकम् ॥ २६८ ॥ ज्ञानं तथोपदिश्यापि दोषाँस्तेषु प्रदर्श्य च। धर्मादिभ्यः पातयेत्तं तथा माहात्म्यमुत्तमम् ॥ २६९ ॥ प्रदर्श्य श्रीहरेः पश्चान्माहात्म्ये दोषदर्शनम्। पातयेत् कारयित्वा तं माहात्म्यादपि सर्वथा ॥ २७० ॥ तद्वद्धरेः स्वरूपस्य निश्चयं प्रोच्य वै स्वयम्। प्रतापं च हरेः प्रोच्य दोषं तत्र प्रदर्श्य च ॥ २७१ ॥ निश्चयाच्च प्रतापाच्च पातयेच्छ्रीहरेस्तु तम्। एवं-विधो जनो यो वै मायावी छलवानिति ॥ २७२ ॥ अनन्तकपटा-ढ्यश्च गुप्तक्ष्वेडो भवत्यपि। उक्तो ज्ञानी न मायायां तस्याऽऽ-कृष्यत एव वै ॥ २७३ ॥ स्वस्निग्धं मानवं चापि रक्षेन्मायापरा-भवात्। अन्यस्तु स्यात् पराभूतस्तन्मायायां न संशयः ॥ ꣱ ॥ ॥ २७४ ॥ पृष्ठवानथ कश्चिद्वै सुपर्णानन्दनामकम्। स्वामिनं (जीवन्मुक्तस्य) बद्धमुक्तस्य विषयेष्वपि कीदृशः ॥ २७५ ॥ रागोऽस्ति, शुद्धमुक्तस्य (विदेहमुक्तस्य) तेषु रागोऽपि कीदृशः।

---

उपदेश करके उसमें भी दोष दिखा कर भक्तिसे गिरा देवे तथा धर्म ज्ञान वैराग्यके उपदेश देके उनमें भी दोष दिखाकर धर्मादिसे भी गिरा देवे तथा भगवान्का माहात्म्य दिखाके उसमें भी दोष दिखाकर माहात्म्यसे भी गिरा देवे तथा भगवान्के स्वरूपका निश्चय व प्रताप कहके पीछे उनमें भी दोष दिखाकर निश्चय व प्रतापसे भी गिरा देवे, ऐसे और भी छल-कपट बहुतसे जिसमें हों ये मायावी पुरुष कहाते हैं, वे अनन्त प्रकारकी माया विस्तारते हैं, इनकी माया में पूर्वोक्त ज्ञानी पराभव नहीं पाता है, तथा ज्ञानीसे संगत रखनेवालेको भी उसकी मायामें फँसने नहीं देता है, आत्मसत्तावाला ज्ञानी सिवा अन्य चाहे जैसा हो तो भी मायावीकी मायामें फँस जाता है, यह बात बराबर समझ रखने योग्य है ॥ ꣱ ॥ और किसीने सुपर्णानन्दस्वामीसे पूछा कि— बद्धमुक्त (जीवन्मुक्त) तथा शुद्धमुक्त (विदेहमुक्त) को विषयमें

कीदृशी प्रकृतिश्चास्ति तयोश्चेति ! तदुत्तरम् ॥२७६॥ सुपर्णानन्द-मुनिराड् जगाद खलु तात्त्विकम्। देहयात्राभिसन्धानं जीवन्मुक्तस्य विद्यते ॥ २७७ ॥ तदर्थं च मनाग् रागः स्वभावः प्रकृतिर्भवेत्। यस्तु विदेहमुक्तोस्ति देहभानविवर्जितः ॥ २७८ ॥ श्रीहरेर्भानयुक्त-श्चाऽऽवरणादिविवर्जितः। मूर्तौ तादात्म्यभावेन वर्तमानश्च सर्वदा ॥ २७९ ॥ मूर्तेर्योगेन वै पुष्टिं प्राप्तश्चेति विनाऽदनम्। क्षुत्तृषावर्जित-श्चेति दिव्यतत्त्वनिभोऽस्ति सः ॥ २८० ॥ शुद्धमुक्तस्वरूपोऽयं यतो रागो न तस्य वै। प्रकृतिर्वा स्वभावो वा मायिकस्तस्य नास्ति हि ॥२८१॥ तथापि दृश्यते तत्र चर्मचक्षुष्मतां यदि। प्रकृतिर्वा स्वभावः स जीवकल्याणहेतवे ॥ २८२ ॥ श्रीहरेराज्ञयाऽस्त्येव दिव्य एव न मायिकः। उत्तरं श्रीसुपर्णानन्दाख्यस्वामी जगाद यत् ॥ २८३ ॥ गोपालानन्दमुनिराडप्याहोचितमेव तत्। एतयोः स्वस्वभावा वै श्रीहरेः सन्निधौ नहि ॥ २८४ ॥ दृश्यन्ते सर्वथा तस्य नियमेषु प्रतिष्ठतोः। यथाऽऽज्ञाऽऽसीच्छ्रीहरेस्तु पुरा सार्धद्विहस्तकम्

---

राग किस वास्ते हैं तथा दोनोंकी प्रकृति किस प्रकारकी है ? इसका जवाब दिया कि—जीवन्मुक्तको देहयात्रार्थ विषयके राग तथा प्रकृति-स्वभाव भी यथापेक्षित रहते हैं, और विदेहमुक्त तो आत्मसत्तासे शुद्धमुक्तभावसे रहता है अतः उसको राग स्वभाव या प्रकृति नहीं है, किन्तु जो कुछ दिखते हैं सो तो जीवोंके कल्याणार्थ उपचारमात्र दिखते हैं। तब स्वामीजीने कहा यह ठीक उत्तर हुआ। और उन दोनोंमें जो स्वभाव-प्रकृति है वह अभी तो नहीं दीखती है क्योंकि बड़ेके जो नियम उसके अनुसार सभी वर्तते हैं इधर उधर नहीं बर्तते हैं, पहले हम लोगों को आज्ञा थी कि—ढाई हाथका एक अँगोछा या अंचला रखना उससे अधिक नहीं रखना एक कौपीन रखना एक गुदडी रखना तथा षट् रस नहीं खाना, आदि जो जो श्रीहरिकी आज्ञा थी

॥ २८५ ॥ कटिवस्त्रं तु संरक्ष्यं नाऽधिकं दीर्घमित्यपि । एकं कौपीनकं, कन्था त्वेका, षड्रसवर्जनम् ॥ २८६ ॥ इत्याद्याज्ञास्ववर्तन्त सर्वे सन्तस्तदा मुदा । अन्यूनाऽधिकभावा वै स्वस्वभावोपमर्दकाः ॥ २८७ ॥ धाम्न्यक्षरेऽपि भगवान् स एकः पुरुषोत्तमः । नियन्ता सर्वमुक्तानां वर्ततेऽतः समा ह्यति ॥ २८८ ॥ प्रकृतिर्वर्तते चापि विषमा न मनागपि, । विना हरिं स्वतन्त्राश्चेदायाताः स्युरिह क्षितौ ॥ २८९ ॥ तथा रुच्यनुसारेण प्रकृतिं संप्रकाश्य वै । यथा-भानं यथाज्ञानं कुर्युस्ते जीवमोक्षणम् ॥ २९० ॥ श्रीरामेण भगवता श्रीकृष्णेन च यस्त्विह । कल्याणस्य परः पन्थाः वर्तितोऽस्तिच तं तथा ॥ २९१ ॥ धर्मपुत्रो हरिश्चात्र भक्तिं संस्थाप्य चोत्तमाम् । सद्धर्मज्ञानवैराग्यमाहात्म्यसहितां पराम् ॥ २९२ ॥ कल्याणस्य परं मार्गं शुभं प्रावर्तयद्धितम् । प्रपश्यन्तु जनास्तत्र श्रैष्ठ्यं कुत्रास्ति वै परम् ॥ २९३ ॥ श्रीहरिस्थापिते मार्गेऽधर्मः कर्तुं प्रवेशनम् मिषं छिद्रं क्षणं क्वापि लभते न, न लप्स्यते ॥ २९४ ॥ विषयाणां सहवासे मुक्तवर्योऽपि रिष्यति । धनस्त्रीमानसंगेन स्थिरा धीर्नहि तिष्ठति ॥ २९५ ॥ अतोऽन्येषां तु का वार्ता परां तस्माद्विदेहताम्

---

वैसेही सब बर्तते थे, अधिक न्यून नहीं बर्तते थे, अक्षरधाममें भी एक श्रीपुरुषोत्तमभगवान् ही सभी मुक्तोंके नियन्ता है अतः मुक्तोंकी प्रकृति एकसरीखी होती है, मगर पृथ्वीमें स्वतन्त्रतापूर्वक आनेसे तो सबकी भिन्न भिन्न प्रकृति दीखे, क्योंकि अपनी स्मृति के अनुसार जीवोंके मोक्षमें प्रवर्ते श्रीरामचन्द्रजी तथा श्रीकृष्ण-भगवान्ने जो कल्याणका मार्ग बांधा है उसे तलाशके देखना, तथा श्रीजीमहाराजने जीवोंके कल्याणार्थ धर्म ज्ञान वैराग्य माहात्म्यज्ञानसहित भक्ति स्थापित किये हैं इन्हें भी देखना, श्रीहरि निर्मित मोक्षमार्ग में कभी अधर्म पैठ नहीं सकता, अन्यत्र चाहे जैसा मुक्त हो वह स्त्री धन मान आदि तीनका अतिसंग

साधयेच्छ्रीहरेर्योगात् सतां सत्संगमादिभिः ॥ ॥ २९६ ॥ अथ स्वामी जगादापि मुक्तोऽक्षरत आगतः । देहधारी भवेदत्र सेवेत यदि पत्तनम् ॥ २९७ ॥ राजसानां मनुष्याणां मैत्र्यं चेत् प्रसमाचरेत् । तेषां संगं प्रकुर्याच्च भुञ्जीतेष्टं गरिष्टकम् ॥ २९८ ॥ मिष्टं स्निग्धं च रसवत् तेनाऽऽसक्तिर्भवेदिति । तस्य मुक्तस्य विषयेष्वत्यन्तं, त्यज्यते न या ॥ २९९ ॥ त्यक्तुमिष्टाऽपि सततं, त्यज्यते किन्तु तेन सा । आक्षरीं भावनां प्राप्य विवेकोत्तमयोगतः ॥ ३०० ॥ निषेधं कुर्वता नित्यं त्यागे यत्नवताऽन्वहम् । त्यज्यते तेन साऽऽसक्तिर्बह्वायासोत्तरं शनैः ॥ ३०१ ॥ अन्यः साधारणो मुक्तो भुक्त्वा तान् विषयाँस्ततः । त्यक्तुं शक्तो न भवतेऽन्यस्य जीवस्य का कथा ॥ ३०२ ॥ अतः प्रथमतस्तेभ्यो भयं प्राप्य तु यः पुमान् । तद्योगं नैव कुर्वीत स त्वात्मानं समुद्धरेत् ॥ ३०३ ॥ नाऽन्यस्तूद्धृत्युपायोऽस्ति तस्मात् संगं त्यजेत् सदा । यस्तु सर्वाधिनाथोऽस्ति भगवान् पुरुषोत्तमः ॥३०४॥ स तु मायां प्रमदाश्च भुञ्ज्यात् सतत-

---

करे तो उसका ठिकाना रहे ही नहीं, तब अन्य जीवोंकी तो बात ही क्या कहना ॥ ॥ और स्वामीजीने बात कहा कि—अक्षरधामका मुक्त भी यदि देह धारण करके यहाँ आया हो वह यदि शहरका सेवन करे तथा रजोगुणी मनुष्यकी भाईबंधाई करे उसका संग करे अच्छे बुरे रस खावे इन सबसे मुक्तको भी विषयमें आसक्ति हो जाती है, ये विषय ऐसे हैं कि तजने पर भी नहीं तजाते हैं, सो तो जब अक्षर भावको प्राप्त होके अति विवेक विचारसे निषेध करके तजे तब बलजबरीसे तजे जाते हैं, साधारण मुक्त तो विषयोंको भोगनेसे भी तज नहीं सकते तो दूसरे जीवोंकी क्या बात कहना । अतः पहलेसे ही विषयोंसे डर के योग ही नहीं करने से बच जाते हैं, अन्य बचनेका उपाय नहीं है । और जो श्रीपुरुषोत्तम हैं वे मायाका संग करे स्त्रीयोंका संग

संगकृत्। धनसंगं राजसानां मनुष्याणां च मित्रताम् ॥ ३०५ ॥ पञ्चविषयसंगं च कुर्याद् भोगान् यथा यथा। तथा तथा हि विषयाः श्रीहरेर्योगतो द्रुतम् ॥ ३०६ ॥ दिव्याः शुद्धाः प्रजायन्ते, सर्वान् शुद्धान् करोति सः। मायां कार्याणि मायायाः, प्राप्तान् योगं हरेस्तथा ॥ ३०७ ॥ पदार्थान्, श्रीहरिः सर्वान् करोत्यक्षररूपिणः। न तु कुत्रापि भगवान् बध्यते तत्र संस्थितः ॥ ३०८ ॥ सन्नपि तां तु मायां स्वस्वरूपिणीं करोति हि। अथ मुक्तस्तु संश्रेष्ठोऽप्यतिदूरे वसेत् तदा ॥ ३०९ ॥ तर्हि तिष्ठेत् स्थितिः शुद्धा, सम्बन्धेऽस्ति तु बन्धनम्। अतः संकल्पयेन्नैव विषयान् कर्हिचित् क्वचित् ॥ [१२] ॥ ३१० ॥ अथ दौलतरामोऽत्र पप्रच्छ स्वमिनं, गुरो !। ज्ञाता मुक्तेन माया तु दुःखरूपा जडा तथा ॥ ३११ ॥ तत्र रागोऽस्य मुक्तस्य कथं वै संप्रजायते ?। स्वामी तत्रोत्तरं प्राह—तस्याऽऽरंभक्षणे पुरा ॥३१२॥ साधनाऽर्जन-काले वै मनाग् रागोऽभवत् खलु। अव्यक्तरूपवान् मायाजन्य-

---

करे धन व रजोगुणी मनुष्यका संग करे पंचविषयोंको भोगे इत्यादि क्रिया द्वारा तो उन सभीको शुद्ध पावन कर डालते हैं, माया व मायाके जो जो कार्य श्रीपुरुषोत्तमके सम्बन्धको प्राप्त हुए हों वे सभी अक्षररूप हो जाते हैं, वे श्रीपुरुषोत्तम भगवान् किसी मायिक पदार्थमें नहीं बँधाते हैं वे मायामें रहते हुए माया को निजसमान बना देते हैं, और मुक्त तो चाहे जैसा बलिष्ठ हो मगर मायासे दूर रहे यही ठीक है, मुक्त यदि विषयका संग करे तो बंधा जावे, अतः विषयोंका संकल्प भी नहीं करना ॥ [१२] ॥ और दौलतरामने पूछा कि—मुक्तने तो मायाको जड व दुखःरूप जाना है तो भी उसमें राग क्यों हो आता होगा ? तब स्वामीजीने कहा कि—उस मुक्तने साधनकालमें ही मायिक विषयमें जरासा राग रखा था इससे

विषयगोचरः ॥ ३१३ ॥ स एव योगसंप्राप्तौ जायतेऽङ्कुरितः पुनः । रागः स एव विषये स्फुटार्थः सम्प्रवर्तते ॥ ३१४ ॥ अतो मुक्तोऽपि सततं दूरे विषयतो वसेत् । न विश्वस्यान्न भुज्यात्तान् संस्मरेन्न च सर्वथा ॥ ३१५ ॥ सांख्ययोगौ दृढौ यस्य यस्योत्तमसुनिश्चयः । निर्विकल्पो दृढो जातस्तस्य रागो न जायते ॥ ३१६ ॥ तस्य नास्त्येव संसर्गो विषयाणां न सेवनम् । न संकल्पस्ततो मुक्तो विदेहाऽऽभः प्रजायते ॥ [13] ॥३१७॥ अथ दोलतरामश्च पुनः पप्रच्छ सद्गुरो ! । ज्ञातव्ये वै कथं ज्ञातृज्ञाने ?, स्वाम्याह चोत्तरम् ॥३१८॥ दुग्धपात्रात् पयो भृत्वा वाटिकायां पिबत्यपि । यस्तस्याऽऽनेन संगेनाऽऽस्वादाऽऽनन्दस्तु जिव्हया ॥ ३१९ ॥ जायते, ज्ञायते चापि सुखं तु रसनास्थले । न हस्ते न च पात्रे वा नैव भृंगारकेऽपि च ॥३२०॥ सोऽयं जीवो निजबुद्धिशक्त्या जानाति यद्धि यत् । तदनुव्यवसायाख्यं ज्ञानं जीवस्य जायते ॥ ३२१ ॥ नेन्द्रियाणां न देवानां गोलकानां च नैव तत् । जीवः श्रोत्रदीन्द्रियाऽन्तःकरणानि च गोल-

---

फिर उसे विषयमें राग बढ़ता है, अतः मुक्तको भी विषयसे दूर रहना चाहिए विषयोंका विश्वास नहीं करना चाहिए तथा भोगना भी नहीं चाहिए, जब सांख्ययोगको दृढ करके उत्तम निर्विकल्पक निश्चयवाला हो गया हो तब उसको विषयमें राग नहीं होता है क्योंकि उसको विषयका सेवन रुचता ही नहीं है ॥ [13] ॥ पीछे दौलतरामने फिर पूछा कि—ज्ञाता व ज्ञानको पृथक् कैसे समझना ? तब स्वामीजीने कहा कि—जाननेवाला ज्ञाता समझना व जाननेका रूप ज्ञान समझना, जैसे दूधके पात्रमेंसे कटोरामें लेके दूध हाथसे उठाके पीया जाता है तभी दूधका स्वाद सुख जीभद्वारा आत्मामें पहुँचता है हाथमें या पात्रमें वह सुख नहीं भासता है, वैसे ज्ञानका पात्र जीव है ज्ञान विषयों में आरूढ होके विषयोंको इन्द्रियोंमें लाके समझ

विषयगोचरः ॥ ३१३ ॥ स एव योगसंप्राप्तौ जायतेऽङ्कुरितः पुनः। रागः स एव विषये स्फुटार्थः सम्प्रवर्तते ॥ ३१४ ॥ अतो मुक्तोऽपि सततं दूरे विषयतो वसेत्। न विश्वस्यान्न भुज्यात्तान् संस्मरेन्न च सर्वथा ॥ ३१५ ॥ सांख्ययोगौ दृढौ यस्य यस्योत्तमसुनिश्चयः। निर्विकल्पो दृढो जातस्तस्य रागो न जायते ॥ ३१६ ॥ तस्य नास्त्येव संसर्गो विषयाणां न सेवनम्। न संकल्पस्ततो मुक्तो विदेहाऽऽभः प्रजायते ॥ [13] ॥३१७॥ अथ दौलतरामश्च पुनः पप्रच्छ सद्गुरो!। ज्ञातव्ये वै कथं ज्ञातृज्ञाने?, स्वाम्याह चोत्तरम् ॥३१८॥ दुग्धपात्रात् पयो भृत्वा वाटिकायां पिबत्यपि। यस्तस्याऽऽनेन संगेनाऽऽस्वादाऽऽनन्दस्तु जिव्हया ॥ ३१९ ॥ जायते, ज्ञायते चापि सुखं तु रसनास्थले। न हस्ते न च पात्रे वा नैव भृंगारकेऽपि च ॥३२०॥ सोऽयं जीवो निजबुद्धिशक्त्या जानाति यद्धि यत्। तदनुव्यवसायाख्यं ज्ञानं जीवस्य जायते ॥ ३२१ ॥ नेन्द्रियाणां न देवानां गोलकानां च नैव तत्। जीवः श्रोत्रदीन्द्रियाऽन्तःकरणानि च गोल-

---

फिर उसे विषयमें राग बढ़ता है, अतः मुक्तको भी विषयसे दूर रहना चाहिए विषयोंका विश्वास नहीं करना चाहिए तथा भोगना भी नहीं चाहिए, जब सांख्ययोगको दृढ करके उत्तम निर्विकल्पक निश्चयवाला हो गया हो तब उसको विषयमें राग नहीं होता है क्योंकि उसको विषयका सेवन रुचता ही नहीं है ॥ [13] ॥ पीछे दौलतरामने फिर पूछा कि—ज्ञाता व ज्ञानको पृथक् कैसे समझना? तब स्वामीजीने कहा कि—जाननेवाला ज्ञाता समझना व जाननेका रूप ज्ञान समझना, जैसे दूधके पात्रमेंसे कटोरामें लेके दूध हाथसे उठाके पीया जाता है तभी दूधका स्वाद सुख जीभद्वारा आत्मामें पहुँचता है हाथमें या पात्रमें वह सुख नहीं भासता है, वैसे ज्ञानका पात्र जीव है ज्ञान विषयों में आरूढ होके विषयोंको इन्द्रियोंमें लाके समझ

कान् ॥३२२॥ देवता विषयाँश्चापि विजानाति पृथक् पृथक् । ज्ञाता ज्ञातृस्वरूपोऽयं ज्ञानशक्त्या हि वेत्ति तान् ॥३२३॥ अर्कस्तेजोमयः स्वस्य तेजःशक्त्याऽभितोऽण्डके । प्रकाशं संकरोत्येव स्वयं मूर्तः स्वलोकगः ॥३२४॥ अस्त्येवेति, तथा जीवो हृदये वसतेऽनिशम् । वसँस्तत्र प्रधीशक्त्याऽऽनखचूडं वपुस्त्विदम् ॥३२५॥ इन्द्रियाऽन्तःकरणानि जानाति युगपत् स हि । एककालीनविद्वान् स ज्ञाता सूक्ष्मोऽस्ति सर्वदा ॥३२६॥ तद्धर्मो ज्ञानमेवेदं सर्वव्याहृतिकारणम् । ज्ञानं द्रव्यं गुणश्चाप्यवस्थावत्त्वात् पराश्रयात् ॥ ३२७ ॥ प्रसृतेर्विषयित्वाच्च ज्ञानं भिन्नं तदाश्रयात् । ज्ञाता भिन्नश्च वै ज्ञानान्न तु ज्ञानात्मवादिवत् ॥३२८॥ ज्ञानं ज्ञाता त्वभिन्नौ वै स्वात्मघातादिदोषतः ॥१४*॥ अथ पूर्वावताराणां भावाः श्रीहरिणा निजे ॥३२९॥ दर्शिताः प्रथमं तेन प्रोक्तं प्रकरणं त्विदम् । भजनार्थं

---

शक्ति द्वारा जीवमें पहुँचता है तब जीव उसी क्रमिक ज्ञानद्वारा भोगता है सुखादि मानता है, यह जीवसे विषयतक व विषयसे जीवतक जो उजाला इसका नाम ज्ञान है यह ज्ञान जीवको होता है नेत्रादि इन्द्रियोंमें गोलकमें या उनकी देवताओंमें नहीं ठहरता है, जिसमें जाके ठहरता है वह ज्ञाता चेतन कहाता है, श्रोत्रादि इन्द्रियाँ अन्तःकरण गोलक देवता व विषय इन सभीको खुद ज्ञाता जीव ज्ञानरूप निजशक्तिसे पृथक्-पृथक् जानता है, जैसे सूर्य खुद तेजोंसे भरा है अपनी तेजरूप शक्तिद्वारा ब्रह्माण्डको उजाला करता है, खुद तो मूर्तिमान स्वरथमें हैं वैसे जीवभी स्वस्थान हृदयमें रहा है वहाँसे अपनी ज्ञानरूप शक्तिद्वारा नखशिखापर्यन्त सभी देह इन्द्रियाँ अन्तःकरणोंका एकही कालमें ज्ञाता है, खुद ज्ञान व ज्ञानवाला दोनों स्वरूप भिन्नतत्त्व हैं, नहीं कि ब्रह्मज्ञानीकी तरह केवल ज्ञानही खुद आत्मा है अतः उपर उक्तानुसार ज्ञाता व ज्ञानको भिन्न समझना ॥ १४* ॥

निषण्णानां संकल्पश्चेत् समुद्भवेत् ॥३३०॥ वपुः कम्पेत चेद्येषां तान् द्रुतं तूदथापयत्। भावोऽयं दर्शितः स्वेन श्वेतद्वीपनिवासिनः ॥३३१॥ वासुदेवस्य वै स्वस्मिन्नेवं प्रकरणानि च। दर्शितानि तथाऽन्यानि तथाहि—च सतां तदा ॥ ३३२॥ षड्रसानां च नियमान् प्रस्थपादाऽन्नभोजनम्। एकवारं हि दिवसे चैककौपीनरक्षणम् ॥३३३॥ एकाऽऽच्छादनवस्त्रस्य धारणं च तथा सदा। एककन्थाऽवनं चाप्यशब्दश्रावो मिथो यथा ॥३३४॥ एकैकस्य सतस्तद्वत् दूरे दूरे निवासनम्। इत्यादिकं हि कठिनं तपः प्रावर्तयत् तदा ॥३३५॥ भावोऽयं दर्शितः स्वस्मिन्नरनारायणस्य वै। वैक्रमेऽब्देऽष्टादशात्मशतके नवषष्टिके ॥ ३३६ ॥ महाराजः करे धृत्वा खड्गं प्राह च तद्यथा। पिबत्ययं तु खड्गो मे रक्तं कुसंगिनामिति ॥ ३३७ ॥ रक्षां सत्संगिनां नित्यं करोत्येव च सर्वथा। खड्गेनाऽनेन सैन्यानि महान्ति विहतानि वै ॥ ३३८ ॥ जामातिका महत्यश्च दैत्या

---

और प्राचीन जो-जो अवतार हुए हैं उन सभीका भाव चमत्कार श्रीजीमहाराजने स्वस्वरूपमें दिखाये हैं, प्रथम श्रीहरि प्रकट हुए तब यह प्रकरण चलाते भये कि भजनमें बैठने पर यदि संकल्प उपजे या शरीर हिलने लगे तो उस भक्तको उठा देते थे, यह निजमें श्वेतद्वीपपति श्रीवासुदेवका भाव दिखाया। जब षट् रसोंके वर्तमान-नियम दिये तथा पाँव मात्र अन्न एक ही समय खानेका नियम दिया तथा एक कौपीन या एक ही पटका रखना व एक गुदड़ी रखना तथा एक-एक जनको परस्पर शब्द न सुने जाय वैसे दूर बसना इत्यादि महाकठिन तप सन्तोंको करवाया यह श्रीनरनारायणका भाव निजमें दिखाया। अठारह सौ ऊनहत्तरकी सालमें श्रीजीमहाराजने हाथ में तलवार लेके पडकार किया कि—यह हमारा खड्ग कुसंगीयोंका लोहू पीता है व सत्संगीओंकी रक्षा करता है तथा इस तरवारसे बड़े-बड़े लश्कर

द्वैधीकृता अपि। दुर्गाण्यपि महान्त्यत्र पातितानि च सर्वथा ॥ ३३९ ॥ अथाऽश्वं चाऽऽरुरोहापि भूषणानि दधार च। दधाराऽमूल्यवस्त्राणि रेमे रंगगुलालकैः ॥ ३४० ॥ अनेकाभिश्च लीलाभिर्भक्तानैकान्तिकान् निजान्। चक्रे सुसुखिनो, भावः श्रीकृष्णस्य हि दर्शितः ॥ ३४१ ॥ स्वस्मिन् स्वेनाऽथ धर्मस्य व्यवस्था या विनिर्मिता। रामचन्द्रस्य भावोऽयं स्वस्मिन् स्वेन निदर्शितः ॥ ३४२ ॥ तथा ज्ञानं च वैराग्यं सांख्यं योगकलादिकम्। सांख्ययोगिव्रतं यद्वद् दर्शितं तन्निजात्मनि ॥ ३४३ ॥ दत्तात्रेयस्य भावोऽपि कपिलस्य च दर्शितः। स्वाश्रितेभ्योऽर्पितं ज्ञानं शिक्षणं तत्तु वै निजे ॥ ३४४ ॥ आर्षभी भावना सम्यक् दर्शिता दययाऽन्विता। तथा ज्ञानस्य धर्मस्य वैराग्यस्य च रीतयः ॥ ३४५ ॥ माहात्म्यसहितायाश्च भक्तेः रीतिः पराशुभा। प्रेमरूपाऽतिभक्तेश्च स्वस्मिन् रीतिः प्रदर्शिता ॥ ३४६ ॥ ताभिश्च भक्तिभिर्भक्ताः स्वस्मिन् योगं गता ह्यति। यथा गंगा पथगाऽद्रीन् भित्वाऽब्धिं

तथा बड़ी-बड़ी जमातें तथा दैत्योंके झुंड काट डाले गये हैं तथा इसी खड्गने बड़े-बड़े किल्ले तोड़ डाले हैं, तथा आप अश्व ऊपर सवार हुए, तथा गहने धारण किये तथा भारी-भारी वस्त्र धारण किये, तथा रंग खेल किया, तथा कई प्रकारकी लीलाओं द्वारा अपने ऐकान्तिक भक्तोंको सुख दिया यह सब श्रीकृष्ण अवतारका भाव निजमें दिखाया। आपने धर्मकी व्यवस्था बाँधा यह श्रीरामचन्द्रजीका भाव निजमें दिखाया। तथा स्वयं आपने ज्ञान वैराग्य तथा सांख्ययोगकी प्रवृत्ति किया यह निजमें दत्तात्रेय तथा कपिलदेवजीका भाव दिखाया। तथा आपने निज आश्रितजनोंको शिक्षा दिया यह निजमें ऋषभदेवभगवान्का भाव दिखाया। अब आपने खुद श्रीपुरुषोत्तमपना भी दिखाया, धर्मज्ञान वैराग्य तथा माहात्म्य सहित ऐकान्तिकी भक्ति करी करायी,

सम्मिलत्यपि ॥ २४७ ॥ तथा भक्ता हरौ भित्त्वाऽन्तरायान् मिलिता ह्यति । त्यक्त्वा त्वर्थान् पदार्थांश्च विघ्नान् भित्त्वा हरौ हि ते ॥२४८॥ संगता एव, चान्याँश्च यादृशाँस्तादृशानपि । कारयित्वा समाधिं चाऽक्षरं धाम त्वदर्शयत् ॥ ३४९ ॥ अष्टावरणपारं च प्रेषयामास तानपि । समाधौ दर्शयामासाऽवतारान् स्वोद्भवानिति ॥३५०॥ स्वस्मिल्लीनीकृताँस्ताँश्च दर्शयामास वै तथा । भक्ते लीनीकृताँश्चापि दर्शयामास सर्वथा ॥ ३५१ ॥ पुष्पस्पर्शेन वेत्रादेः स्पर्शमात्रेण वा तथा । समाधिं गमयामास दर्शयामास चाऽक्षरम् ॥३५२॥ जनान् साधारणाँश्चापीत्येषो भावो निजात्मनि । दर्शितवान् परब्रह्मपुरुषोत्तमतात्मकः ॥ ३५३ ॥ एवं श्रीहरिणा पूर्वाऽवताराणां क्रियाः पराः । दिव्याऽदिव्याः समस्तास्ता लीलया दर्शिता निजे ॥ ३५४ ॥ निश्चिनुयाद्विचार्येत्थं सर्वाविर्भावभाववान् । महाराजोऽ-

---

तथा प्रेमलक्षणाभक्तिकी रीति दिखाया, तथा गंगाजी जैसे पर्वत आदि आड़े रहने या आनेवाले पर्वत आदिको तोड़ फोड़कर समुद्रमें जाके मिलती है, वैसे वे भक्त भी भगवान्के स्वरूपमें जो-जो पदार्थ निजको अन्तराय करते हों उन्हें तजकर स्नेहसे भगवान्में जोड़ाये, तथा श्रीहरिने समाधि कराकर जैसे तैसे जीवोंको भी अष्टावरणसे पार जो अक्षरधाम इसका दर्शन कराया, तथा उस समाधिमें अपने अवतारोंके दर्शन कराके उन अवतारों को अपनेमें लीनकर दिखाये, वैसे ही निज भक्तोंमें भी लीन कर दिखाये, तथा पुष्प छड़ी आदिके स्पर्श कराके अपना धामका दर्शन कराया, इत्यादि चमत्कारोंसे निजमें श्रीपुरुषोत्तमपना दिखाया। इस प्रकार श्रीजीमहाराजने लीलामात्रसे ही पूर्व हुए सभी अवतारोंके कार्य कर दिखाये, इस प्रकार इस बातका विचार करके ऐसा निर्णय कर लेना कि सभी अवतारोंके भाव श्रीजीमहाराजने निजमें दिखलाया अतः सभी अवतारोंके अवतारी

वतार्यस्त्यवताराणां परेश्वरः ॥ ३५५ ॥ सोऽयं धर्मस्य भक्तेश्च पुत्रः प्रकट एव वै । हरिकृष्णो घनश्यामः परब्रह्म सुराजते ॥ ३५६ ॥ अस्याऽऽज्ञायामवताराः सर्वे वर्तन्त एव हि । विजानीयाद्धरिं त्वेवं बुद्धिमान् सम्प्रदायजम् ॥ ३५७ ॥ शुद्धं ज्ञानं लब्धवान् यः स एव नेतरः क्वचित् । शुद्धज्ञानिसतो योगाज्ज्ञानं चेदमवाप्यते ॥ १५ ॥ ३५८ ॥ पप्रच्छ हरजिद्भक्तश्चाप्यथ स्वामिनं ततः । देहे च दैहिके प्रीतिर्जीवस्याति च यादृशी ॥ ३५९ ॥ वर्तते तादृशी कस्मान्नास्ति श्रीभगवत्यपि । स्वाम्युत्तरं जगादपि माहात्म्यं नास्ति तद्विधम् ॥ ३६० ॥ यथा देहस्य माहात्म्यं स्वभावो ममतात्मकः । सम्बन्धिनां च माहात्म्यं ममत्वाद्याः प्रसन्ति वै ॥ ३६१ ॥ तेषु सारोऽध्यवसितः स्वार्थरूपोऽस्ति सर्वदा । स्नेहस्तत्र निजस्वार्थसाधकश्च कृतो ह्यति ॥ ३६२ ॥ सत्संगेन हरौ प्रीतिः कृता गौणी हि वर्तते । त्यागिनोऽपि निजे देहे दैहिके

---

परब्रह्म यह प्रकट श्रीभक्तिधर्मके पुत्र श्रीहरिकृष्ण महाराज ही हैं, अन्य सभी अवतार इनकी आज्ञा वहन करनेवाले हैं, ऐसे श्रीजीमहाराजके स्वरूपको समझना, इस बातको जो बुद्धिमान हो तथा शुद्धसम्प्रदाय द्वारा ज्ञानको प्राप्त हुआ हो तथा इस बातको शुद्ध सम्प्रदायद्वारा समझा हो तभी यथार्थ जान सकता है, नहीं तो नहीं जान सकता है, यह बात बराबर समझ रखना ॥ १५ ॥ और हरजी ठक्करने पूछा कि—देह व देहके सम्बन्धी पदार्थोंमें जैसी जीवको प्रीति है वैसी भगवान्में प्रीति क्यों नहीं होती है? इसका उत्तर स्वामीजीने दिया कि—जीवका सहजही ऐसा स्वभाव है कि अपने सम्बन्धीमें उसको बहुत माल मनाता है इससे उनमें अतिशय स्नेह रहता है, और सत्संग करनेसे भगवान्में प्रीति तो हुई है मगर गौण है, और जो त्यागी है उसको भी देह तथा देहसम्बन्धी पदार्थमें विशेष प्रीति

वस्तुनीत्यपि ॥ ३६३ ॥ प्रीतिर्विशेषतश्चास्ति स्वार्थभावप्रणोदिता । लेखने पठने ग्रन्थे प्रीतिः स्वार्था विशेषतः ॥३६४॥ अतो माहात्म्य-विज्ञानं विना प्रीतिर्हरौ नहि । महत्वं श्रीहरेस्तस्माज्ज्ञातव्यं सर्वथा पुरा ॥ ३६५ ॥ अन्यथा न भवेत्प्रीतिः श्रेष्ठा श्रीपरमेश्वरे । यथा षष्टिप्रकारेषु भोजनेषु जनस्य वै ॥ ३६६ ॥ शष्कुलीमौक्तिक-स्थानापन्नो देहोऽस्ति सम्मतः । दैहिकाश्च पदार्था वै सम्मताः शष्कुलीसमाः ॥ ३६७ ॥ डोडिकाभाजिकास्थाने सुवाभाजीस्थलेऽपि च । भगवान् सम्मतस्तेन प्रीतिश्चाति न जायते ॥ ३६८ ॥ अतो देहं दैहिकाँश्च सेधित्वा भाजिकासमान् । भगवन्तं प्रसंमत्वा शष्कुल्यादिस्थलीयकम् ॥ ३६९ ॥ प्रीतिं कुर्यात्तदा प्रीतिः प्रभौ स्यात् तूत्तमा परा । यथा चापि धनं चास्ति ढब्बुकश्च कपर्दिका ॥ ३७० ॥ स्पर्शमणिस्तथा चिन्तामणिश्चापि धनं परम् । चिन्ता-मणिसमः स्नेहो जीवस्याऽस्ति वपुष्यति ॥ ३७१ ॥ दैहिकेषु पदार्थेषु, हरौ कपर्दिकासमः । ढब्बुकेन समश्चापि हरौ प्रीतिस्ततो

---

रहती है, तथा लिखना-पढ़ना व पुस्तक आदिमें विशेष प्रीति रहती है, यह विना विचारसे रहती है जिससे भगवान्‌में मुख्य प्रीति नहीं होती है, जैसे पचास साठ प्रकारके भोजन हों उनमें जलेबी व बेसनके लड्डू की जगह उसने देह व देहसम्बन्धी पदार्थोंको कर रखे हैं तथा जीवंती या डोडी-पत्तियाँ व सुआ-पालवकी भाजीके ठिकाने भगवान्‌को कर रखे हैं इससे भगवान्‌में प्रीति नहीं होती है। अतः देह तथा देहके सम्बन्धी पदार्थोंका निषेध करके उन्हें भाजीके ठिकाने गिनना, और श्रीभगवान्‌को जलेबी व बेसनके लड्डूकी जगह गिनना, तब भगवान्‌में प्रीति बढ़ती है। और जैसे कौड़ी व पैसा स्पर्शमणि व चिन्तामणि भी धन है, चिन्तामणि के समान स्नेह जीवको देह व देह के सम्बन्धी पदार्थोंमें है, और भगवान्‌में प्रीति तो कौड़ी व पैसेके

नहि ॥ ३७२ ॥ अतो देहं दैहिकाँश्च ज्ञात्वा चाऽसत्यरूपिणः । कपर्दिकासमानाँश्च, हरिं चिन्तामणिप्रभम् ॥ ३७३ ॥ ज्ञात्वा प्रीतिं परां कुर्यात् तदा प्रीतिः परा भवेत् । सन्त्यसत्या देहदैहिकार्थाः सत्या न ते खलु ॥ ३७४ ॥ भूतार्था वर्तमानार्था भविष्यार्थाः ऋता न वै । साररूपा न ते सन्ति मरीमरीचिवारिवत् ॥ ३७५ ॥ खरशकृत्कृता सुखडिका सुखमयी नहि । न सुखाश्च तथा देहदैहि-कार्थाः कदाचन ॥ ३७६ ॥ जीवोऽयमाप्तवान् भोगान् राजयोग्याँस्तु भूपतौ । इन्द्रभोगान् सुरेशत्वे ब्रह्मभोगाँश्च वेधसि ॥ ३७७ ॥ राजेन्द्रब्रह्मदेहार्थाः सत्या नैव कदापि वै । बहुवारं प्रजातास्ते भुक्ता नष्टाः पुनः पुनः ॥ ३७८ ॥ वैराजस्य शरीरार्थाः सत्या नैव कदाचन । कालकवलरूपास्ते ह्यसत्याः सर्वथा सदा ॥ ३७९ ॥ प्रधानपुरुषस्यापि देहार्थाः सत्यतोज्झिताः । कालनाश्या हि ते सर्वे

---

समान है, अतः भगवान्में उत्तम प्रीति नहीं है, सो जब देह व देहसम्बन्धी पदार्थोंको असत्य व कौड़ीकी तरह या पैसे की तरह जाने व श्रीभगवान्को चिन्तामणिके ठिकाने गिने, तो भगवान्में अतिशय प्रीति होती है, तब उत्तम प्रीति बढ़ती है। और देह तथा देहसम्बन्धी पदार्थ सभी असत्य हैं, वे कभी सत्य नहीं हैं, तथा पहिले हो गये व भविष्यमें होनेवाले कोई भी पदार्थ सत्य नहीं हैं, वर्त्तमानकालमें जो हैं वे भी सत्य नहीं हैं, तथा उनमें किसी प्रकारका माल नहीं है, जैसे मृगतृष्णाका पानी कभी सत्य नहीं है तथा जैसे गधेकी लेंडीके पक्वान्नमें कभी सुख नहीं है, वैसे देह तथा देहके सम्बन्धी वस्तुमें कभी माल नहीं है, यह जीव तो राजाके देह सम्बन्धी भोगको पा चुका है इन्द्रकी देहके सम्बन्धवाले भोगोंको पा चुका है, तथा ब्रह्माके देहसम्बन्धी भोगोंको पा चुका है, मगर उन ब्रह्मादिके जो शरीर व शरीर-सम्बन्धी पदार्थ कोई कभी सत्य नहीं है, वे तो अनन्तवार भोगे

प्रकृतेः पुरुषस्य च ॥ ३८० ॥ आत्यन्तिके प्रलये वै देहार्थो नाशयोगिनः । अतः सर्वमसत्यं संज्ञात्वा, सत्यं हरिं प्रभुम् ॥ ३८१ ॥ जीवात्मानं तथा मोक्षं ज्ञात्वा सत्यस्वरूपिणम् । प्रीतिं कुर्यात् परां तस्मिन् नारायणपरात्मनि ॥ ३८२ ॥ सुखं चाऽपरिमीतं तत् सर्वं नारायणेऽस्ति वै । भुंजते तत् सदा दिव्याऽक्षरमुक्ता मुदान्विताः ॥ ३८३ ॥ नैव तृप्यन्ति येनैते तादृक्सुखनिधिर्हरिः । दिव्यमूर्तिर्हि भगवान् सर्वेशः पुरुषोत्तमः ॥ ३८४ ॥ श्रीमान् श्रीजीमहाराजो प्रकटोऽस्ति दयापरः । अस्मच्छ्रेयोविधानार्थं चैवं ज्ञात्वा हरेस्त्विह ॥ ३८५ ॥ माहात्म्यं परमं तत्र कुर्यात् प्रीतिं परां सदा । दृढां चापि महाराजे दिव्यां चाऽप्यविनाशिनीम् ॥ ३८६ ॥ अन्यदेहप्रदेहार्थान् प्रकृतेः पुरुषस्य च । तत्पर्यन्तान् पदार्थांश्चाऽसत्यान् ज्ञात्वा विनाशिनः

---

गये व अनन्तबार नष्ट हो गये, सत्य नहीं हैं, तथा वैराजके शरीर व भोग्य पदार्थ भी कभी सत्य नहीं हैं, उन्हें काल नष्ट करता है अतः वे असत्य हैं, तथा प्रधानपुरुषके शरीर व शरीरसम्बन्धी पदार्थ सभी असत्य हैं, क्योंकि उन्हें भी काल नष्ट करता है, और आत्यन्तिक प्रलयमें प्रकृति पुरुषका शरीर भी नहीं रहता है तो दूसरे मायिक तत्त्व तो कहांसे रहे ? ऐसे सभी असत्य जानके तब सदा सत्य जो आत्मा तथा परमात्मा इन दोको सत्य जानके परमात्मा श्रीनारायणमें सभी प्रकारसे प्रीति करना, तथा समझना कि जो अपरिमित सुख है यह भगवान्में ही रहा है इस सुखको अनन्त कोटि मुक्त निरन्तर भोगते हैं, तो भी तृप्ति नहीं होती है, ऐसे सदा सुखमय व सदा दिव्यमूर्ति श्रीपुरुषोत्तम भगवान् ये श्रीजीमहाराज ही हैं वे हम लोगोंके कल्याणार्थ दया करके प्रकट हुए हैं, इस प्रकार देह गेहादिसे प्रकृति पुरुषपर्यन्त सभीको असत्य समझके उनमेंसे प्रीति तोड़के श्रीजीमहाराजमें प्रीति

॥ ३८७ ॥ तेभ्यः प्रीतिं प्रविच्छिद्य हरौ कुर्यात् सुखप्रदाम् । अन्यथा कोट्युपायाद्यैर्न स्यात् प्रीतिर्दृढा हरौ ॥१६॥ ३८८ ॥ अथ स्वाम्यक्षरमूर्तिगोपालानन्दयोगिराट् । वार्तां चक्रेऽस्य जीवस्याऽवश्यकर्तव्यमस्ति यत् ॥३८९॥ एतद्विचारणीयं वैवासनाऽव्यक्तरूपिणी । पंचविषयसंजीव्या दृढमूला हि वर्तते ॥३९०॥ नाशनीया तु सा सर्वाऽसत्यज्ञानेन वै शनैः । मायापुरुषपर्यन्तं सर्वं देहधनादिकम् ॥३९१॥ असत्यमेव बोद्धव्यं, कार्या तस्य विचारणा । रागहीनस्तथा जीवः कर्तव्यश्च विवेकिना ॥ ३९२ ॥ सत्तारूपेण कर्तव्या प्रीतिर्भगवति ध्रुवा । अथ प्रीतिं विना देहक्रिया याऽध्ययनात्मिका ॥३९३॥ लेखनाद्याश्च सर्वास्ता नान्तरीयक्य एव हि । यथा महति कर्तव्येऽल्पांगकर्तव्यतेति वै ॥३९४॥ आवश्यकी क्रिया निर्धारिता प्रीतिर्दृढा हरौ । जीवशुद्धिस्तथा चापि, तदन्यद् गौणमेव वै ॥३९५॥ वपुर्निर्वाहकं स्वल्पं मतं नाऽऽवश्यकं हि तत् । 'प्रसाद-

---

करना यह अतिदृढ हो जाती है, इसके बिना अन्य कोटि उपाय करनेसे भी वैसी श्रीजीमहाराजमें दृढ प्रीति नहीं होती है ॥१६॥ और अक्षरस्वरूप श्रीगोपालनन्दस्वामीने वार्ता कहा कि इस जीवको अवश्य जो करनेका है यह विचारना, इस जीवको पंचविषयोंमें घूसकर रही जो वासना उसे प्रकृतिपुरुषपर्यन्त देहगेहादि सभीके असत्य विचार करके धीरे-धीरे नष्ट करना तथा जीवको रागरहित करना तथा सत्तारूप करके भगवान्में प्रीति करना, और जो-जो पढ़ना-लिखना आदि अन्यान्य देहकी क्रियाएँ तो गौण ही कर रखना, जैसे कोई अति बड़ा काम सिद्ध करना हो उसके करनेमें सहज अन्य बीच-बीचके छोटे काम आते जाते निपटते हैं वैसे देहक्रिया तो अवश्यमात्र जो सोच रखी हो या करनाही पड़े वैसी करते जाना, जीवको तो शुद्ध करके भगवान्में दृढ़ प्रीति करना यह आवश्यक करनेका है, अन्य सभी तो देह

यामि बहुभिः कर्मभिः परमेश्वरम्'। ॥ ३९६ ॥ एवं ज्ञात्राऽपि बोद्धव्यं 'बहुभिः कर्मभिर्नहि। प्रसीदति हरिर्नोऽप्यकर्मणाऽ'तो विचारवान् ॥३९७॥ भूत्वा जीवगतां दह्यात् पञ्चविषयवासनाम्। वर्तेत श्रीमहाराजाऽऽज्ञायां वै सावधानकः ॥ ३९८ ॥ शिक्षापत्रीं तथा धर्मामृतं निष्कामशुद्धिकाम्। अनुसृत्य च वर्तेत सेवेताऽऽचार्यदेवताः ॥३९९॥ साधून् मन्दिरमेवापि सर्वं ग्रन्थत्रयानुगः। नैव तद्धर्ममाहत्य संसेवेत कदाचन ॥४००॥ एवंविधो जनः स्वल्पं कुर्यात् तस्यापि धर्मजः। मन्यते बहु चैवेति तद्विना तु कृतं बहु ॥४०१॥ अपि नैव मतं स्यात् तत् प्रसन्नो न हरिर्भवेत् ॥ १७ ॥ अक्षरानन्दमुनिराट् पप्रच्छ स्वामिनं, गुरो ! ॥ ४०२ ॥ विचारो वर्तते मध्ये यस्त्वन्तःकरणाऽऽत्मनोः। कस्याऽयं ननु विज्ञेयः?

---

निर्वाहार्थ है, वे आवश्यक नहीं हैं, किसीको ऐसा विचार हो कि—मैं बहुत करके श्रीभगवान्को राजी प्रसन्न कर लूँ मगर भगवान् बहुत करनेसे या न करनेसे भी राजी नहीं होते हैं, भगवान् तो आज्ञामात्र करनेसे तथा समझपूर्वक करनेसे राजी प्रसन्न होते हैं, एक तो निजात्मामें घूसकर रही जो पंचविषयोंकी वासना उसे आत्मामेंसे निकालके श्रीजीमहाराजकी आज्ञानुसार रहना, धर्मामृत निष्कामशुद्धि व शिक्षापत्रीके अनुसार बर्तना, तथा मन्दिरकी देवकी आचार्योंकी सेवा करना, सन्तकी सेवा आदि जो-जो करना सभी तीन ग्रन्थोक्त मर्यादामें रहके करना, जितनी बन सके उतनी सेवा करना, धर्म तज कर सेवा नहीं करना, इस प्रकार समझपूर्वक थोड़ा किया हुआको भी भगवान् बहुत करके मान लेते हैं, इसके सिवा तो ज्यादा किया हुआ हो तो भी उससे भगवान् प्रसन्न नहीं होते हैं ॥ १७ ॥ और अक्षरानन्दस्वामीने पूछा कि—अन्तःकरण और आत्माके बीच जो विचार हुआ करता है यह दो में से किसका समझना? तब

स्वाम्युत्तरमुवाच ह ॥४०३॥ मोक्षार्थको विचारो यः स वै साक्षिनिर्देशितः। साक्षिणा हरिणा यद्वा साधुभिः संप्रदेशितः ॥ ४०४ ॥ सच्छास्त्रैर्देशितो यद्वा न त्वन्तःकरणात्मनोः। स्वभावजो विचारः सः, किन्त्वागन्तुक एव हि ॥४०५॥ मुमुक्षुर्वै यदाऽऽरंभे सत्पुरुषाननात्तथा। सच्छास्त्रश्रवणाच्चापि विचारं संप्रशिक्षते ॥ ४०६ ॥ इन्द्रियाऽन्तःकरणेषु संस्थापयति तं ततः। साक्षी जीवे स्थितस्तं च प्रपुष्णाति मुहुः खलु ॥ ४०७ ॥ विचारस्य स्वरूपं तु स्वात्मवर्ष्मविभेदकृत्। देहोऽयं नाशयोग्यस्ति दुःखरूपो विकारवान् ॥ ४०८ ॥ दैहिकाश्च पदार्था ये सत्सम्बन्धिकुटुम्बिनः। सर्वे वै नाशशीलास्ते दुःखरूपाश्च दुःखदाः ॥४०९॥ आत्माऽस्ति सुखरूपश्च सत्तारूपोऽजराऽमरः। अच्छेद्योऽभेद्य एवापि परिणामविवर्जितः ॥४१०॥ सनातनस्वरूपश्च सच्चिदानन्द एव सः। एवंविधो विचारोऽयं जडचेतनयोः स तु ॥ ४११ ॥ साक्षिणः सत्पूरुषाणां सच्छा-

स्वामीजीने कहा कि—वह विचार न आत्माका है न तो अन्तःकरणका है, वह विचार तो सत्शास्त्र व सत्पुरुषका है, जब मुमुक्षु प्रथम सत्पुरुषके मुखसे तथा सत्शास्त्रमेंसे ज्ञान सम्पादन करता है तब उस ज्ञानसे जो विचार रहता है वह उसीका ही कहा जाता है, पीछे उस विचारका देहमें इन्द्रियोंमें व अन्तःकरणमें प्रयोग करनेकी आजमाइश होती है, सो इस प्रकार है—यह देह नाशवन्त दुःखरूप व विकारवान् है तथा देहके सगासम्बन्धी व पदार्थ भी नाशवन्त व दुःखरूप हैं, और आत्मा ही अच्छेद्य अभेद्य अजर अमर सत्तारूप है तथा सनातन व परिणामरहित है, यह जो जड चेतनका विचार वही सत्पुरुष व सत्शास्त्रसे प्रकट होता है, यह अन्तःकरण व आत्माकी बीच रहता हुआ देहादि व आत्माको पृथक् रखता है, अर्थात् देहादिके भावोंको आत्मामें घूसने नहीं देता है तथा आत्माके भावोंको देहादिमें

स्त्राणां च विद्यते । वर्तमानः स वै मध्ये सदाऽन्तःकरणाऽऽत्मनोः ॥ ४१२ ॥ देहं जीवं पृथग्भूतौ रक्षते, बलवान् हि सः । देहभावान् स्वात्मरूपे मिश्रीकर्तुं हिनोति न ॥ ४१३ ॥ आत्मभावान् शरीरे सङ्करितुं प्रहिणोति न । दृढभावो विचारः सः पृथग् रक्षति तावुभौ ॥ ४१४ ॥ एवमात्मा पृथग्भूतः स्वात्मसत्ताप्रभाववान् । ध्यायति श्रीहरिं नित्यं श्रीपूर्णपुरुषोत्तमम् ॥ १९ ॥४१५॥ अथैकदिवसे स्वाम्य-क्षरमूर्तिर्दयापरः । गोपालनन्दमुनिराड् वार्तां चक्रे समुत्तमाम् ॥ ४१६ ॥ देहेऽस्मिन् दुःखमेवाऽस्ति सुखाल्पांशो न विद्यते । केषाञ्चिद्भासते शं यत् तद्दुःखाधिकतोत्तरम् ॥ ४१७ ॥ दुःखाधि-क्यस्य विगमे स्थिरदुःखेऽवशेषिते । सुखी संवृत्त इति वै दुःखमेव तु भासते ॥ ४१८ ॥ पूर्वं दुःखं यदासीत् तत् स्थितं, व्यस्तं ततोऽ-धिकम् । यत् तद्दुःखाधिक्यहानिः सुखमित्यभिमन्यते ॥ ४१९ ॥ यथा क्षुधायुतः कश्चित् तृषितश्चाऽन्नवारिणी । ग्रसेत् ततो वदेज् 'जातं सुखं मे' तत्र किं सुखम् ॥ ४२० ॥ तत्तु तात्कालिकीक्षुत्तृड्-

---

घूसने नहीं देता है, वैसा यह विचार दृढ़ होनेसे निरन्तर जड चेतन व देहादि तथा आत्माका भेद ज्ञान व विवेक रहने लगता है तब वह विवेकी भक्त आत्मसत्तारूपसे रहता हुआ सतत पर-मात्मा श्रीहरि श्रीजीमहाराज श्रीपूर्णपुरुषोत्तम भगवान्के ध्यान धारणमें ही मग्न रहता है ॥ १९ ॥ और एकदिन अक्षरस्वरूप श्रीगोपालानन्दस्वामीने कृपासे वार्ता कहा कि—इस देहमें केवल दुःखही है सुख तो है नहीं, अगर किसीको सुख मालूम होता है तो वह मायिक सुख तो अधिकदुःखसे मिश्रितही है, अधिक दुःख होनेसे ही बादमें मानता है कि—सुख भया, यह सुख नहीं हुआ है जितना दुःख था वही रहा है, अधिक दुःख आने और जानेसे सुखकी भ्रान्ति लगती है, सभीको भूख या प्यास लगनेसे खाने-पीनेके बाद सुख माननेमें आता है मगर भूख व प्यासका दुःख-

विगमात्मकमेव हि । दुःखं क्षुत्पूर्वमासीद्यत् क्षुत्कालेऽपि च यद्धि तत् ॥ ४२१ ॥ तिष्ठत्येव तदानीं वै सूक्ष्मरूपं गतं न तत् । अथ कश्चिद्भवेद् रुग्णस्ततो रोगविवर्जितः ॥ ४२२ ॥ तदा मन्येत सुखिनं, सुखं तत्र किमागतम् ?, । दुःखं पूर्वस्थितं स्वास्थ्ये तद् यथावद्धि वर्तते ॥ ४२३ ॥ दुःखाधिक्यस्य विगमः सुखमित्यभिमन्यते । सत्यसुखाऽभिकामस्तु पञ्चविषयवासनाः ॥ ४२४ ॥ जीवस्थाः संविलीयैव स्वात्मसत्तापरो यदा । भूत्वा श्रीजीमहाराजस्यैव माहात्म्यपूर्विकाम् ॥ ४२५ ॥ भक्तिं निष्कामभावेन कुर्यात् प्रेममयीं पराम् । स्नेहं कुर्याद्धरौ तत्र नारायणपरात्मनि ॥ ४२६ ॥ कामी स्त्र्यां लोभवान् द्रव्ये यद्वत् तद्वद्धरावपि । एवंविधो हरेर्भक्तो-देहान्ते च हरीच्छया ॥ ४२७ ॥ भागवतीतनूरूपो भूत्वा पूर्णावतारिणम् । भक्तिधर्मसुतं धाम्नि सत्पतिं पुरुषोत्तमम् ॥ ४२८ ॥ हरिकृष्णमहाराजं यदा संसेवतेऽनिशम् । तदा सुखातिपूर्णात्मा भवते नान्यथा क्वचित् ॥ ४२९ ॥ अत्र लोके परत्रापि बहुसम्प-

---

का जाना ही सुख माना जाता है फिर भूख प्यासकी वही दुःखकी हालत तो लगी ही है, तथा बीमार होनेसे विशेष दुःख दीखता है बीमारी जानेके बाद माना जाता है कि अब सुख हुआ मगर कायमी दुःख तो रहा ही है नया सुख आया नहीं है अधिक दुःख आया था सो गया वैसा प्रवाह चलता ही है। अतः सत्य सुख तो तभी होता है जब कि पंचविषयोंकी बासना जीवमेंसे निकल जाय व आत्मसत्तारूप होके श्रीपुरुषोत्तमनारायण श्रीहरि श्रीजीमहाराजकी प्रेमलक्षणाभक्ति उनके महात्म्यज्ञान सहित निष्कामभावसे की जाय तथा उन भगवान्में अतिशय स्नेह हो जाय तब ध्यान धारणा द्वारा अति सुख मिलता है, जैसे अतिशय कामी पुरुषको स्त्रीमें अति स्नेह है, अति लोभीको धनमें अति स्नेह है, वैसा स्नेह श्रीजीमहाराजमें करना, इस प्रकारके

त्तिभाजनम् । यो भवेत् स भवेद् दुःखी सम्पत् दुःखस्य कारणम् ॥४३०॥ इन्द्राद्याश्च महापुंपर्यन्ता बह्वृद्धयोऽपि ये । बह्वैश्वर्ययुताश्चातिगौरवाद्यन्विता अपि ॥४३१॥ दुःखातिदुःखयुक्तास्ते भवन्तेऽधिकदुःखिनः । हरेर्मूर्त्तिं विनाऽन्यत्र सुखं नास्ति हि शाश्वतम् ॥ ४३२ ॥ दुःखाऽसंभिन्नमेवाऽपि तथा ध्वंसविवर्जितम् । ह्रासवृद्धिवियुक्तं च निरपेक्षस्वरूपकम् ॥१९॥ ४३३ ॥ अथाऽक्षरस्वरूपः श्रीगोपालानन्दयोगिराट् । वार्तां चक्रे-पूरुषा वै पञ्चधा संभवन्ति हि ॥ ४३४ ॥ तान् विज्ञाय प्रसंगं वै कुर्यान्न त्वन्यथा क्वचित् । उत्तमस्तु पुरुषो वै भगवन्तं स्मरेत् सदा ॥४३५॥ अन्यान् संस्मारयेत्तं श्रीहरिं शरणसंश्रितान् । ततोऽवरो द्वितीयस्तु स्वार्थमात्रपरायणः ॥ ४३६ ॥ स्वार्थार्थं संस्मरेन्नाथं त्वेक एवेति सर्वथा । तृतीयश्च ततोऽन्यूनोऽन्याश्रयेण हरिं स्मरेत् ॥ ४३७ ॥ ततो न्यूनश्चतुर्थस्तु संस्मरेन्न हरिं स्वयम् । स्मर्तारमितरं स्मारयितारं चातिमन्यते ॥ ४३८ ॥ पञ्चमस्तु कनिष्ठो वै संस्मरेन्न हरिं

---

भक्तको देहत्यागके बाद भागवती तनुसे अवतारी पूर्णपुरुषोत्तम भक्तिधर्मके पुत्र श्रीहरिकृष्ण महाराजकी सेवामें रहना मिले तभी सुखीपना होता है उसके विना तो जितनी अधिक सम्पत्ति पाता है उतना अधिक दुःखी होता है, इन्द्रसे लेके महापुरुषपर्यन्त जितनी अधिक सम्पत्तिको प्राप्त करता है तथा अधिक ऐश्वर्य व महत्ताको प्राप्त करता है उतना अधिक दुःखको पाता है, क्योंकि आत्यन्तिक महासुख तो एक श्रीहरिकी मूर्ति सिवा अन्यत्र कहीं नहीं है ॥१९॥ और अक्षरस्वरूप सद्गुरु श्रीगोपालानन्दस्वामीजीने वार्ता कहा कि—पाँच प्रकारके पुरुष हैं उनको पहचानके संग करना, उनके लक्षण कहते हैं कि एक तो वैसा होता है कि खुद भगवान्का स्मरण करता है तथा उसके आश्रयमें जो जो आवे उनको भी भगवान्का स्मरण करने देता है। दूसरा तो

क्वचित् । स्मर्तृनन्यान् निषेधेच्च विक्षेपं तत्र चाचरेत् ॥ ४३९ ॥ अतस्तान् संप्रविज्ञाय महत्संगं समाचरेत् । ऐकान्तिको भवेच्चा-प्युत्तमानां संगकृज्जनः ॥ ४४० ॥ हरेः स्मर्तुः स्मारयितुः सत्संगं सर्वदाऽऽचरेत् ॥ ३० ॥ अथ पप्रच्छ हरजिद्भक्तः श्रीस्वामिनं, गुरो ! ॥ ४४१ ॥ ऐकान्तिकत्वहीनस्य संकर्षणनिवेशनम् । उक्तं वचोमृते तद्वै स्फुटं बोधय मामिति ॥ ४४२ ॥ स्वामी प्राह न चान्यत्र सन्ति संकर्षणादयः । किन्तु सर्वेऽत्र सत्संगे भवन्त्येव समागताः ॥ ४४३ ॥ यदाऽऽक्षरेशसन्मूर्तिः प्रकटः पुरुषोत्तमः । पृथ्व्यामाविर्भवत्येव तदा त्विन्द्रादयस्तथा ॥ ४४४ ॥ महापूरुष-पर्यन्ता ऐश्वर्यार्थीश्वरेश्वराः । आयान्त्यत्र स्वकल्याणार्थाय भूत्वा हि देहिनः ॥ ४४५ ॥ अवताराः समस्ताश्च प्राऽऽयान्ति हरिणा सह । तदानीं श्रीहरेरैकान्तिका भक्ता हरावति ॥ ४४६ ॥ स्नेहं

---

वैसा होता है कि खुद अकेला भगवान्का स्मरण किया करता है। तीसरा तो वैसा होता है कि अन्य किसीके सहारेसे भगवान्का स्मरण करता है। चौथा तो वैसा होता है कि खुद तो भगवान्को नहीं सुमिरता है, मगर अन्य कोई भगवान्को सुमिरता हो या न सुमिरता हो तो भी उसमें सभी तरफसे अच्छा मानता है। और पाँचवाँ तो वैसा है जो खुद भगवान्को नहीं सुमिरता है न तो अन्य किसीको भगवत्स्मरण करने देता है। इन पाँचो प्रकारके जीवोंको पहचानके तब उत्तमका समागम करके ऐका-न्तिक होना, जो खुद संभारे व अन्यको भगवान्का स्मरण करावे वैसे पुरुषका संग करना ॥ ३० ॥ और हरजी ठक्करने पूछा कि हे स्वामिन् ! वचनामृतमें कहा है कि जो ऐकान्तिक नहीं होंगे उनका प्रवेश संकर्षणादिमें होता है, इस बातकी स्पष्टता क्या है ? तब स्वामीजीने कहा कि संकर्षण भी यहाँ सत्संगमें ही है, अन्यत्र है वैसा नहीं समझ रखना, जब श्रीपुरुषोत्तम प्रकट होते हैं

कुर्वन्ति तद्भक्तिं कुर्वन्त्यैकान्तिकीमपि । सर्वथा श्रीहरौ ते तु लग्ना युक्ता भवन्त्यति ॥ ४४७ ॥ ते तु त्यक्त्वा वपुर्नैजं सेवायां परमात्मनः । श्रीहरिकृष्णपुरुषोत्तमस्याऽक्षरधामनि ॥ ४८८ ॥ स्वाश्रितान् स्वप्रमग्नाँश्च स्वलग्नान् मानवानपि । नयत्येवाऽक्षरं धाम श्रीहरेः परमात्मनः ॥ ४४९ ॥ ऐश्वर्यार्थीश्वरा ये ते सत्संगे गुरुतां गताः । वर्तन्ते साधुरूपास्ते कारयन्ति जनान् बहून् ॥ ४५० ॥ सत्संगिनो हरेर्वार्तां श्रावयित्वा ततो यदि । सत्संगिनो हरौ श्रीजीमहाराजे परात्मनि ॥ ४५१ ॥ स्नेहं कुर्युस्तदोपास्त्या हरेर्यान्त्यक्षरं पदम् । किन्तु चेत् ते तदैश्वर्यार्थीश्वरेषु परात्परम् ॥ ४५२ ॥ स्नेहं प्राप्तास्तदा ताँस्ते त्वैश्वर्यार्थीश्वरा यतः । धाम्नश्चाऽत्र समायातास्तत्तद्धाम नयन्ति तान् ॥ ४५३ ॥ तेऽपि तद्धाम यान्त्येव तेषु स्निग्धा यतो हि ते । ऐश्वर्यार्थीश्वराश्चापि स्वस्वधाम्नि समाधिना ॥ ४५४ ॥ देहान् प्ररक्ष्य नैजान् वै शेषायुः संप्ररक्ष्य च । रूपान्तरैः समायातास्त्वत्र देहादिधारिणः ॥ ४५५ ॥ तदायुः-

---

तब महापुरुषसे लेके सभी ईश्वर तथा इन्द्रादि देव ये सभी ऐश्वर्यार्थी अपने कल्याणार्थ देह धारण करनेको यहाँ आते हैं, तथा अन्य सभी अवतार भी श्रीपुरुषोत्तमके साथ आये होते हैं, तब जो ऐकान्तिक भक्त हो इसको तो श्रीपुरुषोत्तम से ही स्नेह होता है, क्योंकि वह ऐकान्तिक भक्तिद्वारा श्रीपुरुषोत्तम में ही लग्न हुआ है, अतः वह जब देह तजे तब श्रीहरिकृष्ण पुरुषोत्तम जो श्रीजीमहाराज उनमें ही प्रविष्ट होके उनकी सेवामें अक्षर धाममें जाके रहता है तथा निजसे स्नेहवालेको भी उसी अक्षरधाममें ले जाता है। और जो जो महापुरुषादि ऐश्वर्यार्थी हैं वे तो सत्संगमें बड़े गुरु होके श्रीजीमहाराजकी वार्ताद्वारा जिस किसीको सत्संग करावे तभी उस सत्संगीको यदि श्रीजीमहाराजमें पूर्णस्नेह हुआ हो तब तो वह अक्षरधाम में जाता है, मगर उस

कापि त्वमन्यत ॥ ❋ ॥ कस्यचित् सुरताऽऽवासिपारशीज्ञाति देहिनः ॥ १०० ॥ एक एवाऽभवत् पुत्रो मूक एव हि जन्मतः। तस्य वाचः प्रकाशार्थं पित्राऽनेकैश्चिकित्सकैः ॥ १०१ ॥ वैद्यकीयोपचाराः संकारिताश्च तथा सुराः। देव्यश्च प्रार्थिताः सम्यङ् मानताधारणादिभिः ॥ १०२ ॥ तथापि वाङ् न बालस्य प्रोद्भूताऽतः परं द्रुतम्। पितुः श्रवणमागच्छत् प्रतापो दिव्य उत्तमः ॥ १०३ ॥ खुशालक्ष्मासुरस्याथ पिता मूकं सुतं च तम्। नीत्वा-तु टोडलाग्रामे खुशालाऽऽलयमाययौ ॥ १०४ ॥ नत्वा च पादयोर्विज्ञापयामास यथायथम्। दुःखं पुत्रनिमित्तं वै तत्काले भक्तराडपि ॥ १०५ ॥ खुशालार्यः स्वयं स्वीयनित्यकर्मणि पूजने। हरेर्मूर्तेस्तदा चाऽऽसीत् तत्र तस्य दयाऽतिगा ॥१०६॥ उद्भूताऽतीव मूकस्य दुःखं वीक्ष्य ततो द्रुतम्। हर्यर्पितस्य कदलीफलस्याऽर्धं प्रसादजम् ॥ १०७ ॥ ददौ मूकाय बालाय बालो भुक्त्वा च तत्क्षणे। उवाचाऽहो महामिष्टं कदलं वर्तते त्विदम् ॥ १०८ ॥ श्रुत्वा वाणीं

---

मानकर ऐश्वर्यका लेशमात्र भी अभिमान अपनेमें नहीं आने देते थे, ॥ ❋ ॥ सुरतनगरमें किसी पारशीगृहस्थको एकही पुत्र था, वह जन्मसे ही गूँगा था, उसके लिये उसने अनेक वैद्यकीय उपचार किये, कई देव-देवियोंकी मानता की, तथापि वह गूँगा मिटा नहीं। इस समय उसने खुशालभाईका प्रताप सुना, तब वह गूँगा पुत्रको लेके टोडला गाँवमें खुशालभाईके पास आया, चरणोंमें नमन करके दुःख निवेदित करता भया, इस वख्त खुशालभाई नित्य नियमित पूजामें बैठे थे, उसका दुःख सुनकर दयासे पूजामें जो देवको कदलीफल भोगमें अर्पण किया था उसका आधा भाग गूँगाको दिया, वह गूँगा खाके तुरन्त ही बोलने लगा कि—यह केला बहुत मीठा है, यह सुनकर उसका पिता अति आनन्दित हुआ, इस प्रकारके खुशालभाईके प्रतापसे

सुतस्यापि पिताऽऽनन्दप्लुतोऽभवत् । आश्रितश्चाऽभवत्तस्य तत आरभ्य सर्वदा ॥ १०९ ॥ बालस्य मूकता नष्टा वाणी स्पष्टाऽभवत् सदा ॥ *[११] ॥ एवं खुशालभक्ते चाऽनादिमुक्ते स्वभावजाः ॥११०॥ आसन्ननन्तनित्यस्वसिद्धैश्वर्यविभूतयः । साकं त्वनन्तमुक्तैः श्रीहरिं धारयतो हृदि ॥ १११ ॥ कुर्वतश्च हरेः सेवां दध्रे सोऽक्षरमुक्तताम् । अस्याऽऽसीन्नहि पार्थक्यं श्रीहरेः किञ्चिदित्यपि ॥ ११२ ॥ तथाप्यस्मिन् शुभे लोके दिव्यमानुषरूपिणः । प्रत्यक्षस्य हरेर्नित्यं सेवादर्शनयोः क्वचित् ॥ ११३ ॥ वियोगं स प्रषोढुं न शक्तोऽभवदनारतम् । तथापि श्रीहरेराज्ञालोपः कार्यः कचिन्नहि ॥ ११४ ॥ मत्वैवं स्वगृहेऽवात्सीत् प्राघूर्णिक इवोन्मनाः । नित्यं लीनं मनस्त्वस्य स्वेष्टदेवपदोरभूत् ॥ ११५ ॥ *[१२] ॥ श्रीहरिस्तु खुलाशस्य भक्तस्याऽऽतुरतां सतीम् । विदित्वा तं स्वसेवायां रक्षितुं विप्ररूपधृक् ॥ ११६ ॥ ययौ गृहं खुशालस्य खुशालोऽपि विलोक्य तम् । हरिं परिचितं पूर्वभवीयं परमेश्वरम् ॥ ११७ ॥

---

वह बालक सदाके लिये बोलने लगा ॥ *[११] ॥ खुशालभाईमें इस प्रकारके अनन्त ऐश्वय स्वभावसिद्ध थे, क्योंकि स्वयं अनादिमुक्त थे, अनन्तमुक्तोंको धारण करनेवाले ब्रह्मसहित श्रीहरिको सदा धारण करते हुए श्रीहरिकी सेवामें रहनेवाले सदा ही ब्रह्मरूप अक्षरस्वरूप थे, उनको श्रीपुरुषोत्तमनारायणसे लेशमात्र-भिन्नता नहीं थी, इस लोकमें भी मनुष्यमूर्ति प्रकट प्रभुके दर्शन और सेवाका वियोग स्वल्प भी सहन नहीं कर सकते थे, गुरुकी आज्ञाका लोप न होनेके कारण श्रीहरिकी आज्ञासे घरमें पाहुनाकी तरह रहे थे, उनका अन्तःकरण तो निरन्तर श्रीहरिके चरणोंमें ही लीन रहता था ॥ *[१२] ॥ श्रीहरि खुशालभाईकी तीव्रता जानकर अपनी सेवामें रखनेके अभिप्रायसे उसके घर ब्राह्मणके वेषमें गये, खुशालभाई भी विप्रको पूर्वसमयके निज परिचितके

प्रत्यभिज्ञाय साकं श्रीमहाराजेन वै तदा। सौराष्ट्रान् कंकदेशाँश्च भ्रमितुं निर्ययौ मुदा ॥ ११८ ॥ जायाऽपत्यगृहस्मृद्धीर्धनं तत्याज सर्वथा। मार्गे खुशालभक्तस्याऽनादिमुक्तस्य सर्वशः ॥ ११९ ॥ सेवा विप्रस्वरूपेण कृता श्रीहरिणा स्ववत्। यतो भक्तखुशालेन दर्शनातुरताबलात् ॥ १२० ॥ निर्गतेन गृहान्नैव पाथेयं संधृतं सह। नापि वारिप्रपानार्थं कलशोऽपि समधृतः ॥ १२१ ॥ नोपानहौ पदोश्चापि नाऽऽसनं चाऽम्बरं वरम्। नोष्णिक् नान्यद् धनं किञ्चिदतः श्रीहरिणा मुहुः ॥ १२२ ॥ विप्ररूपेण भक्तस्य पाथेयस्य प्रदापनात्। जलार्पणाच्च पदयोः कण्टकानां विकर्षणात् ॥ १२३ ॥ एवं नैजस्य देहस्य यथा तद्वत्तु सेवनम्। कृतं वै गच्छता मार्गे जयतल्पपुरान्तिके ॥ १२४ ॥ आनितः स खुशालाख्यो भक्तस्तस्मिन् दिने पुरे। स्वामिनारायणः साक्षाद्वर्तमानोऽभवद्धरिः ॥ १२५ ॥ साधुभिः सहितः सोऽयं विप्ररूपस्तदा प्रभुः। भक्तं

---

तुल्य समझकर उनके साथ सौराष्ट्र देशमें जानेके लिये घरसे निकल गये। माल मिल्कत सहित घर व बालबच्चोंका सदाके लिये त्याग करके मार्गमें आगे बढ़ने वाले अनादिअक्षरस्वरूप खुशालभाईकी बरदास्त श्रीहरिने बहुत प्रकारसे किया था, क्योंकि श्रीहरिके दर्शनार्थे आतुरतासे चल देनेके कारण खुशालभाईने साथमें खानेको भत्ता या जलके लिये लोटा और पैरोंमें पहननेका जूता भी नहीं लिया था। जिससे विप्ररूप श्रीहरिने उसे खानेको भत्ता और पीनेको जल ले आके दिया था, तथा उसके पैरों में से काँटा निकाला था, इस प्रकार निजशरीरकी सेवासमान सेवा करके श्रीहरि उसे जेतलपुरके समीप ले आये, इस समय मूलस्वरूप श्रीहरि स्वामिनारायण भगवान् जेतलपुरमें ही बिराजते थे, इस कारणसे संघाती विप्रने खुशालभाईसे कहा—'इस गाँवमें श्रीस्वामिनारायणभगवान् बिराजते हैं, उनके

खुशालमाहेदं 'अत्र ग्रामे हरिः स्वयम् ॥ १२६ ॥ स्वामिनारायण-श्चाऽऽस्ते याहि तं त्वं द्रुतं त्वितः। अहं स्नात्वा समायामि सरस्यत्र क्षणान्तरे ॥ १२७ ॥ श्रुत्वा खुशालभक्तोऽपि हरौ सर्वसुखाऽऽप्तिमान्। सह स्नातुं त्वनादृत्य ग्रामे श्रीहरिमाययौ ॥ १२८ ॥ कृत्वा च दर्शनं धार्मेः स्वाऽऽर्तिशान्तिं समानयत्। ततश्च हरिणा पृष्टो वृत्तान्तो मार्गसंवृतः ॥ १२९ ॥ वार्ता मार्गीयवृत्तस्य वर्णिताऽथ तथा ततः। खुशालेन स्वभक्तेन ज्ञातं सर्वं हरिकृतम् ॥ १३० ॥ नैजं प्रसेवनं ग्रामप्रान्ताभिनयनं तथा। स्वेष्टदेवेन हरिणाऽनेन सर्वं कृतं त्विति ॥ १३१ ॥ विप्ररूपस्य धार्मेस्तु स्वस्मिन् श्रेष्ठोऽस्त्यनुग्रहः। परोपकारधर्मश्च ज्ञातो भक्तेन तेन वै ॥ १३२ ॥ ततोऽतिहर्षं संप्राप्य श्रीहरेः स्वगुरोः प्रभोः। इच्छयैव यथा धाम्नि स्थितस्तद्वत्त्विहाऽपि च ॥ १३३ ॥ सेवायां सर्वदा वर्तमानोऽस्थाच्छ्रीहरेः पुरः ॥ १३* ॥ तस्मिंश्च समये पृथ्व्यां पुरुषोत्तमधार्मिणा ॥ १३४ ॥ परब्रह्मपरेशेन साकं सर्वावतारिणा।

---

पास आप जाईए, मैं इस तालाबमें नहा के तुरन्त हा आता हूँ, तब खुशालभाईको सभी सुख श्रीहरिमें ही होनेसे, उसने विप्रके साथ तालाबको जाना छोड़कर सीधे ही गाँवमें जाकर श्रीहरिके दर्शन करके अति शान्ति प्राप्त किया, पीछे श्रीहरिने मार्गका वृत्तान्त पूछा और भी सभी बात कहा, तब खुशालभाईको विदित हुआ कि—मार्गमें मेरी सेवा करके यहाँ तक पहुँचानेवाले विप्ररूप ये ही मेरे इष्टदेव श्रीहरि ही थे, फिर खुशालभाई तो अपने पर श्रीहरिका ऐसा अनुग्रह और उपकार समझकर अति आनन्दित होके गुरुदेव श्रीहरिकी इच्छानुसार धाममें जिस प्रकार सेवामें है उसी प्रकार यहाँ भी सेवामें अखण्ड रह गये ॥ १३* ॥ उस समय सर्वावतारी प्रकट पुरुषोत्तम श्रीहरि के साथ उनके अक्षरधामवासी अनेक मुक्त अनेक अवतार तथा दूसरे

अक्षरब्रह्म साक्षाद्वै मुक्तास्तद्धामवासिनः ॥ १३५ ॥ अनेके चावताराश्च भिन्नधामाधिपास्तथा । धामधामिप्रभवश्च तन्मुक्तास्तत्तदीश्वराः ॥ १३६ ॥ आसन् समागताश्चात्र मानवं रूपमाश्रिताः । एतेषां ब्रह्मसदसि सर्वदा ब्रह्मचिन्तनम् ॥ १३७ ॥ चर्चाऽऽस्पदं च वार्तायामासीत्तत्त्वं च धार्मिकम् । ज्ञानवैराग्यसंयुक्तं भक्तिलाभप्रबोधकम् ॥ १३८ ॥ साम्प्रदायिकमेवाऽपि रहस्यं शास्त्रदोहनम् । साररूपं सदा तत्राऽभवच्चैतत्प्रसंगतः ॥ १३९ ॥ महाभारतनाम्नस्तु पुस्तकस्यैकदाऽभवत् । आवश्यकत्वमेवाऽपि प्राप्त्यर्थं भावपत्तने ॥ १४० ॥ भारतस्याऽस्यपूर्णस्य विप्राग्रेऽत्रस्थितस्य च । प्रेषितो हरिणा भक्तो रामदेरासरीभिधः ॥ १४१ ॥ गत्वा स भावनगरे त्रिशतैः रूप्यकैः खलु । पुस्तकं प्राप्स्यते चेत्यागत्य दुर्गपुरेऽवदत् ॥ १४२ ॥ श्रुत्वा श्रीहरिणा संप्रेषितो वै रूप्यकैः सह । रामदेरासरी चापि जगन्नाथाख्यपण्डितः ॥ १४३ ॥ पुस्तकं सर्वशो वीक्ष्य ग्राह्यं मूल्येन चेति यत् ।

---

दूसरे धामोंके धामी भगवान् तथा उनके भी मुक्तगण यहाँ प्रकट हुए थे, इनकी सभामें कायम मुख्यतः ब्रह्मतत्त्वकी ही चर्चा होती थी, साथ-साथ धार्मिक और साम्प्रदायिक भक्तितत्त्वकी भी चर्चाएँ होती थीं, और अनेक शास्त्रोंका रहस्यदोहन होता था, इस प्रसंगमें एकबार महाभारतनामक ग्रन्थकी जरूरत पड़ी, यह ग्रन्थ भावनगरमें एक विप्रके पास होनेका विदित हुआ, उस ग्रन्थको ले आनेके लिये श्रीहरिने गढपुरसे रामदेरासरीको चिट्ठी देके भेजा, उसने भावनगर जाके ग्रन्थवालेको तीन सौ रुपये देके पुस्तक लेनेको निश्चित्त किया, वह पुस्तक आद्यन्त देख लेनेके लिये किसी पढ़ेलिखेको साथ ले जानेके लिये गढ़पुर वापस आया, तब श्रीहरिने जगन्नाथभाईको साथ भेजा, वे दोनों भावनगर गये, विप्रसे पुस्तक देखलेनेको माँगा, मगर वह

जगन्नाथस्तथा रामो जग्मतुर्भावपत्तनम् ॥ १४४ ॥ ययाचाते च तं विप्रं पुस्तकं वीक्षितुं तथा । क्रेतुं त्रिंशतमुद्राभिस्तदा विप्रोऽवदन्न न ॥ १४५ ॥ वीक्षितुं न ददाम्येव विक्रयं न करोम्यपि । एवं हठान्निषिद्धौ तावुभौ दुर्गपुरं पुनः ॥ १४६ ॥ रिक्तहस्तौ समायातौ वृत्तान्तं प्राहतुस्ततः ॥ ताभ्यां साकं तु हरिणा तृतीयो ब्राह्मणस्तदा ॥ १४७ ॥ द्विवेदी प्रेषितो नाम्ना विद्वन्मान्यः प्रयागजित् । त्रयस्ते भावनगरे गत्वा तं पुस्तकाधिपम् ॥ १४८ ॥ बोधयामासुरत्यर्थं साम्ना दाम्ना नयेन च । तथापि स द्विजो नैवाऽऽर्पयद् भारतपुस्तकम् ॥१४९॥ निषिद्धास्ते त्रयस्तूर्णं निराशाः पुनराययुः । दुर्गपुरे हरिं नत्वा नैराश्यं सन्न्यवेदयन् ॥ १५० ॥ ततः श्रीहरिणा भक्तः खुशालः सुप्रतापवान् । एकाकी प्रेषितः सोऽपि गत्वा भावपुरे शुभे ॥ १५१ ॥ श्रीमालिश्रीविप्रवर्यझीणाभक्तगृहेऽवसत् । परेऽह्नि पुस्तकाधीशब्राह्मणस्य गृहं ययौ ॥ ॥ १५२ ॥ पुस्तकेशोऽभवत् तत्र बालकृष्णस्य पूजने । स्थितश्चातो न सत्कारं वाचाऽप्यस्याऽकरोत् तदा ॥ १५३ ॥ पूजान्ते स तिरस्कारं प्रोवाचाऽपि तथापि वै । खुशालस्तु निकटेऽस्य

---

विप्र बदल गया, उसने पुस्तक देनेकी ना कह दिया, जिससे वे दोनो खाली हाथसे वापस आये, पीछे श्रीहरिने उन दोनोंके साथ प्रयागजित् द्विवेदीको उस विप्रको समझाकर पुस्तक ले आनेके लिये भेजा, वे तीनों भावनगर गये, उस विप्रको बहुत समझाते भये, मगर देनेको हा नहीं पानेसे वे तीनों वापस आये, और श्रीहरिसे कहने लगे कि—महाराज ! पुस्तक मिलेगा ही नहीं, पीछे श्रीहरिने अकेले खुशालभाईको भेजा, वे भावनगर जाके झीणाभाई श्रीमाली ब्राह्मणके घर निवास करके दूसरे दिन ग्रन्थवाले ब्राह्मणके घर गये, वह विप्र श्रीबालकृष्णकी पूजामें था, आवकार सत्कार नहीं करके तिरस्कार करने लगा, खुशाल-

निषसाद् भुवस्तले ॥ १५४ ॥ तावद्वै बालकृष्णस्य प्रतिमा विप्र-सम्मुखी। याऽऽसीत् सा तु परावृत्त्य खुशालस्य तु सम्मुखी ॥ ॥ १५५ ॥ अभवत् तत्र वै ध्यानं मनो नो दत्तवान् द्विजः। मूर्तिं तां स्वकरेणैव व्यधात् स्वस्य तु सम्मुखीम् ॥ १५६ ॥ किन्तु तूर्णं परावृत्त्य पुनः सा प्रतिमा स्वयम्। आसीत् खुशालभक्तस्य सम्मुखीति ततोऽपि च ॥ १५७ ॥ विप्रोऽवमत्य तां 'तूर्णं व्यधान्मूर्तिं स्वसम्मुखीम्। तथाऽपि पूर्ववत् सा तु खुशालस्यैव सम्मुखी ॥ १५८ ॥ भूत्वाऽतिष्ठत्तदा प्राह खुशालः पुस्तकाधिपम्। अतिथिं गृहसम्प्राप्तं पूजयेत् स्वागतादिना ॥ १५९ ॥ अर्घ्यासन-प्रदानेन, पादप्रक्षालनेन च। श्रद्धया चान्नदानेन प्रियप्रश्नोत्तरेण च ॥ १६० ॥ गच्छन्तं चानुयानेन प्रीतिमुत्पादयेद् गृही'। इत्येवं पुस्तकाधीशं श्रावयित्वा जगाद यत् ॥ १६१ ॥ गृहागतस्य सन्मानं त्वयितेन कृतं मम। अतो विष्णुः स्वयं जातोऽप्रसन्नस्त्वयि पूजके ॥ १६२ ॥ श्रुत्वा खुशालभक्तस्य वाक्यमित्थं ततो द्विजः। विशेषेणाऽतिसंक्रुद्धः प्राहाऽधिक्षेपपूर्वकम् ॥ १६३ ॥ गच्छ याहि

भाई तो चूपचाप पृथ्वीमें बैठेही थे, उस समय श्रीबालकृष्णकी प्रतिमा फिरकर खुशालभाईके सन्मुख हो गयी, उस विप्रने तो मनमें कुछ भी खयाल न लेके प्रतिमाको स्व-सन्मुख कर लिया, किन्तु तुरन्त ही प्रतिमा फिरकर खुशालभाईके सन्मुख हो गयी, इस प्रकार तीसरी बार भी हुआ, तब खुशालभाईने ही कहा— 'हे विप्र! घर पर आये हुए अतिथिका स्वागत अर्घ्यप्रदान आसनप्रदान चरणधोना आदि करना चाहिये, श्रद्धासे अन्नप्रदान प्रियप्रश्नवचन करना चाहिए, और घरसे चले तब उनके साथ जाना व आशीर्वाद लेना चाहिए,। आपने घर पर आये हुए अतिथिका सन्मान नहीं किया, इससे ये भगवान् आपसे रुष्ट हुए हैं, यह सुनकर विप्र विशेष क्रोधित होके डाँटकर बोला

त्वितः स्थानान्न दास्ये पुस्तकं मम। इत्याकर्ण्य खुशालोऽपि निस्ससार तदालयात् ॥ १६४ ॥ स्वाऽऽवासगृहमागत्य सुखं सुष्वाप वै निशि। रात्रौ द्वौ यमदूतौ संप्रेषयामास तद्गृहम् ॥ १६५ ॥ आसीद् ग्रन्थाधिपः सुप्तस्तं दूतौ ताडनं परम्। चक्रतुः प्राहतुश्चापि–'प्रतिश्रुत्य धनं पुरा ॥ १६६ ॥ पुस्तकं न ददास्यद्य चाऽवमानं करोष्यपि। महापुंसस्त्वद्गृहाऽऽयातस्य पूज्यस्य सद्गुरोः ॥ १६७ ॥ अतस्त्वां जीवतस्त्वद्य मारयामो न संशयः। श्रुत्वेति यमदूतोक्तं त्वार्तनादपरो द्विजः ॥ १६८ ॥ दीनां वाणीं समुच्चार्य सुक्षमां समयाचत। पुस्तकस्य प्रदानं च स्वीचक्रे तत्क्षणे द्रुतम् ॥ १६९ ॥ यमदूता व्यरमन्त ताडनाच्च गतास्ततः। अथ प्रातः समुत्थाय ग्रन्थेशः प्रययौ सह ॥ १७० ॥ नीत्वा भारतसद्ग्रन्थं खुशालाऽऽलयमादरात्। नम्रो भूत्वा नमस्कृत्य क्षमां तस्मादयाचत ॥ १७१ ॥ पुस्तकं च ददौ तस्य मूल्यं प्राप्य ययौ गृहम्। खुशालो भक्तराड् ग्रन्थं गृहीत्वा दुर्गपत्तनम् ॥ १७२ ॥ आययौ श्रीहरिदृष्ट्वा ग्रन्थं चाति

---

कि—यहाँसे चले जाओ, मैं पुस्तक दूँगा नहीं, । तब खुशालभाई वहाँ से चलके अपने ठहरनेके मकानको आये, उसी रात्रिमें पुस्तकवाला विप्र घर में सोता था वहाँ उसके पास दो यमदूत आके उसे मार मारने लग गये, तथा बोले—कि—तूम सौदा कबूलके अब पुस्तक देता नहीं है तथा महापुरुष तेरे घर आये उनका तुमने अपमान किया इस कारण तुम्हें जानसे मार डालना है, ऐसा सुनकर विप्र बहुत कृपणवाणी बोलके क्षमा माँगने लगा, तथा पुस्तक देनेको कबुल हुआ, तब यमदूत मार मारना बन्द करके चले गये, दूसरे दिन वह विप्र खुशालभाईके पास गया, नम्रतापूर्वक क्षमा माँगके महाभारत ग्रन्थ किम्मत लेके देने लगा, खुशालभाई किम्मतसे पुस्तक लेके गढ़पुर आये,

प्रसन्नताम् । प्राप प्राह च 'कार्याणि कर्तव्यानि मया त्विह ॥ १७३ ॥ मद्योग्यानि समस्तानि कुर्याद् यस्तादृशस्त्वयम् । खुशालो मत्समश्चास्ति मत्कर्तव्यं करिष्यति ॥ १७४ ॥ १४ ॥ दीक्षादानात् प्रपूर्वं श्रीहरिणा प्रेषितस्त्वयम् । न्यग्रोधपत्तने सत्संगस्य वृद्धयर्थमादरात् ॥ १७५ ॥ गत्वा खुशालभक्तोऽपि वटपत्तनमुत्तमम् । मासं चोवास विप्रस्य सदाशिवभिधस्य च ॥ १७६ ॥ गृहे नित्यं स जग्रास भोजनं पावनं ततः । तत्र गृहे खुशालस्येच्छया श्रीभगवान् स्वयम् । १७७ ॥ दिव्यरूपेण चागत्य खुशालेन समं सदा । नित्यं जग्राह भोज्यं चोपविष्टश्चासनेऽर्पिते ॥ १७८ ॥ तदानीं दर्शनं श्रीजीमहाराजस्य सर्वथा । नान्यस्य जायते किन्तु पूरिते स्थालपात्रके ॥ १७९ ॥ भोज्यानि तत्र जायन्ते सम्यगूनानि तानि वै । प्रपश्यन्ति जनाः सर्वे प्रतापं तत्प्रदर्शितम् ॥ १८० ॥ एवंविधानि नैकानि त्वैश्वर्याणि पुरैव च । दीक्षाग्रहणपूर्वाणि खुशालाख्येऽभवन् यतः ॥ १८१ ॥ हरेस्तस्य च भक्तस्यैकता यद्वदनादिनी । दृश्यमानाऽभवन्नित्यं दिव्यकार्यमयी परा ॥ १८२ ॥ १५ ॥ दीक्षाग्रहोत्तरं स्वामी गोपालानन्दयोगिराट् ।

---

श्रीहरि पुस्तक देखके अति प्रसन्न होके बोले कि—हमारे द्वारा होनेवाले कार्य भी करे वैसे ये खुशालभाई हैं ॥ १४ ॥ श्रीहरिने एकबार खुशालभाईको दीक्षा देने पहले भी सत्संग बढ़ानेके लिये बडौदा भेजे थे, वे वहाँ एक मास ठहरे थे, और सदाशिव भाईके घर भोजन लेते थे, भोजनके समय श्रीहरि दिव्यरूपसे पधार कर खुशालभाईके साथ भोजन लेते थे, उस वख्त अन्यजनोंको दर्शन तो नहीं होता था, मगर परोसी हुई चीजें पात्रमें कमती होती जाती थीं यह दिखता था, इस प्रकारके अनेक सामर्थ्य खुशालभाईमें श्रीहरिकी एकता दर्शानेवाले प्रकट दिखते थे ॥ १५ ॥ दीक्षा लेनेके बाद भी स्वामी श्री बडौदामें श्रीहरिकी

हरेः समाज्ञयोवास बहुधा वटपत्तने ॥ १८३ ॥ मासं मासद्वयं चातुर्मासं चोवास वै क्वचित् । श्रेष्ठानां विदुषां शंकासमाधानानि सर्वथा ॥ १८४ ॥ विधाय विदुषस्तत्थान् गृहस्थाँश्चाधिकारिणः । राज्यसत्तायुतान् काँश्चिद् वटपत्तनभूपतिम् ॥ १८५ ॥ एवमन्याः प्रजाश्चापि प्रकटस्य हरेस्तदा । परब्रह्मण एवाऽयं माहात्म्यं पारमेश्वरम् ॥ १८६ ॥ श्रावयित्वा च वै संबोधयित्वा चाश्रितान् व्यधात् । ऐश्वर्याणि त्वनेकानि चमत्कारान् बहूँस्तथा ॥ १८७ ॥ वैदुष्याढ्योपदेशाँश्च वितरय्य निजाश्रितान् । गोपालानन्दमुनिराट् चक्रे शिष्यान् सुवैष्णवान् ॥ १८८ ॥ इदानीं पत्तने तत्र सत्संगो यो विलोक्यते । फलं स्वाम्युपदेशस्य बोध्यं मुक्तमुनेरिव ॥ १८९ ॥ आकाशमहिमानं तद्वासा जानन्ति पक्षिणः । न वै पार्थिववासास्तं प्रजानन्ति तथैव च ॥ १९० ॥ स्वामी स्वयं सदा श्रीजीमहाराजेन वै समम् । निवास्यक्षरधामस्थोऽक्षररूपोऽप्यनादितः ॥ १९१ ॥ नित्यमुक्तो यतः साक्षाज्जानात्येव हरेः परम् ।

---

आज्ञासे कईबार गये थे, मास दो मास चातुर्मास भी रहते थे, और अच्छे अच्छे विद्वानोंकी शंकाओंके समाधान करते थे, स्वामी श्रीने कई विद्वानोंको तथा राज्यके अधिकारी लोगोंको तथा नरेशको भी प्रकट पुरुषोत्तम श्रीहरिकी महिमा समझाकर तथा अनेक ऐश्वर्य चमत्कार भरा उत्तम उपदेश दे कर श्रीहरिके आश्रित बनाये थे, स्वामीश्रीकी शिष्यपरम्पराका सत्संग अभी भी बडौदामें उनके प्रयासका फलरूप है, जैसे आकाशकी महिमा आकाशगामी पक्षिगण जान सकते हैं पृथ्वीके प्राणी नहीं जान सकते वैसे स्वामी श्री निरन्तर भगवान्‌के साथ ही रहनेवाले अनादि अक्षर-स्वरूप नित्यमुक्त होनेसे उनके समान दूसरा कौन भगवान्‌की महिमा पूर्णरूपसे जान सके और कह भी सके, दूसरे लोग सुनकर कहने जायँ तो कह भी न सके बल्कि हाँसीके पात्र बने और

श्रेष्ठं तु महिमानं वै नाऽन्यो जानाति तादृशम् ॥ १९२ ॥ नापि शक्नोति वक्तुं च, कथने वा प्रशंसने । प्रत्युतैतत्स्थले स्याद्वै तद्वैगुण्यं प्रहास्यकृत् ॥ १९३ ॥ जायेताऽज्ञानतस्त्वेवं, न तु स्वामिवचस्सु तत् । कोऽपि दोषो न वा स्याच्च सर्वज्ञस्य यथा गिरि ॥ १९४ ॥ गौर्जरे काशिकातुल्यं वटपत्तनमुच्यते । तत्रत्यान् विदुषो राज्यप्रधानान् संविजित्य तु ॥१९५ ॥ शिष्यान् विधापयेत् स्वामी गोपालानन्द एव वै । एकज्योतिर्विदे स्वामी निजाऽलौकिकशक्तिजम् ॥ १९६ ॥ प्रदर्श्यापि चमत्कारं प्रजास्वाश्चर्यमातनोत् ॥ [१६ *] ॥ स्वामिनारायणः स्वामी द्वावेतौ सर्वदा सह ॥ १९७ ॥ वर्तिनौ वासिनौ चाऽप्यनादिकालात् समन्वितौ । वर्तेते चात्र लोकेऽपि दिव्यरूपेण संस्थितौ ॥ १९८ ॥ विचरन्तौ सहैवोभौ चैकमानससत्क्रियौ । श्रीहरिर्निजभक्तस्य तस्य सर्वक्रियाविधौ ॥ १९९ ॥ साफल्यं कृतवानासीद् दीक्षाया अपि धारणे । मानसं सुदृढं वीक्ष्य वैक्रमे वत्सरे शुभे ॥ २०० ॥ वेदरस-

---

जाने भी नहीं, स्वामीश्रीके वचनमें तो किसी भी प्रकार का दूषण आने पावे नहीं, बडौदा तो गुजरातकी काशी है, उसकी विद्वान् जनता या राजकीय मण्डलको शिष्य बनाना तो स्वामीश्री ही कर सके एकबार स्वामीजीने वहाँके एक ज्योतिषशास्त्रीको अलौकिक चमत्कार दिखलाके चकित किया था, जिससे समग्र शहर की ज्ञानी अज्ञानी सभी जनता आश्चर्यचकित हो गयी थी ॥ [१६ *] ॥ श्रीस्वामिनारायणभगवान् खुशालभाईके साथ अनादिकालसे रहे हुए हैं, इस लोक में भी निरन्तर साथ ही विचरते थे, और खुशालभाईके सभी कार्योंको सफल करते थे, तो भी खुशालभाईको साधुकी दीक्षा लेनेको इच्छा थी, जिससे श्रीहरिने संवत् १८६४ के कार्तिक कृष्णाष्टमीके दिन प्रातः एक प्रहर दिन होनेपर गढ़पुरमें उत्तमराजाके दरबारमें अपने निवासस्थानमें

सिद्धिभू (१८६४) माने कार्तिके कज्जले दले। अष्टम्यां प्रहरे सूर्य चोर्ध्वंगे दुर्गपत्तने ॥ २०१ ॥ उत्तमक्ष्माभृतः सौधे स्वालये भगवान् हरिः। दीक्षां ददौ स्वभक्ताय खुशालाय च नाम च ॥ २०२ ॥ गोपालानन्दजीस्वामीत्येवं सार्थकमुत्तमम्। ददौ ततोऽस्य मुक्तस्य महत्ताऽपि व्यवर्धत ॥ २०३ ॥ साधुः परमहंसश्च गुरुश्चापि च सद्गुरुः। क्रमेण गौरवं जातं ततः श्रीहरिणाऽपि सः ॥ २०४ ॥ स्थापितो मुख्यसंस्थाने सर्वसद्गुरुसत्सताम्। प्रशंसितश्च बहुधा सर्वसद्गुरुसंसदि ॥ २०५ ॥ ※ ॥ अपि श्रीजीमहाराजो मुक्तानन्दमुनिं गुरुम्। सदैव मानयामास चादितश्च तथापि तम् ॥ २०६ ॥ चैकदा प्राह भगवान् श्रीस्वामिन् भवता 'त्वयम्। पश्चात् समागतश्चास्ति गोपालानन्दयोगिराट् ॥२०७॥ सत्संगे मन्यते चैद्वै न महानिति' तन्मृषा। सत्यं वदामि चायं मेऽनादिकालान्निरन्तरम् ॥२०८॥ सेवकोऽक्षररूपोऽस्ति नैकमुक्तसमन्वितः। अत्रापि मम सेवार्थं स्वयं प्रकटितोऽस्ति हि ॥२०९॥ एवं श्रुत्वा हरेर्वाक्यं मुक्तानन्दमुनीश्वरः। महत्तां बुबुधे तस्य ततः

---

भगवती दीक्षा दिया और गोपालानन्दस्वामी ऐसा सार्थक शुभनाम रखा, स्वामीश्री पहले तो परमहंस सन्त ही थे, बादमें गुरुपदमें आये, अनन्तर सद्गुरुपदकी महत्तावाले हुए, और श्रीहरिने उनका प्रभाव बढ़ता देखके सभी सद्गुरुओंका मुख्य पद अर्पण किया, तथा कईबार स्वामीश्रीकी महत्ताका बखान सद्गुरुओंकी सभामें किया था ॥ ※ ॥ श्रीजीमहाराज स्वयं मुक्तानन्दस्वामीको प्रथमसेही गुरुरूपमें मानते थे, तो भी श्रीहरिने एकबार उनसे कहा—गुरुदेव! स्वामिन्! गोपालानन्दस्वामी पीछेसे सत्संग में आये हैं अतः उन्हें आप छोटे समझते होंगे मगर वे तो बहुत बड़े हैं, हम अनन्तमुक्तसहित जिस धाममें रहे हैं वहाँके वे अक्षरस्वरूप महामुक्त हमारी सेवाके लिये

कालान्निरन्तरम् ॥ २१० ॥ यदा नैजासने स्वामी गोपालानन्द-योगिराट् । समागच्छेत्तदा नित्यं मुक्तानन्दमुनिर्द्रुतम् ॥ २११ ॥ तस्मै शुभासनं दत्वा समानं वै न्यषादयत् । प्रथमं तु क्षितौ नित्यं यो मुनिर्निषसाद यत् ॥ २१२ ॥ ✻ ॥ एकदा मुनिराट् स्वामी वटपत्तनतो द्रुतम् । कारियाण्यां समागत्य मिमील श्रीहरिं प्रभुम् ॥ २१३ ॥ वार्तां हरिस्तदा चक्रे—'यद्धेतोरिह चागतौ । आवां तं भूरि सत्संगं स्थापयावोऽत्र भूतले' ॥ २१४ ॥ एतां वार्तां प्रशुश्राव निष्कुलानन्दयोगिराट् । ततः प्राह प्रहास्यार्थं निष्कुलानन्दसाधुराट् ॥ २१५ ॥ वटपत्तनतो योऽत्र त्वाययौ स तु पत्तने । राजसैर्बहुभावैः संव्याप्तः स स्यात् कथं सुखी ॥ २१६ ॥ तदोत्तरं हरिः प्राह नैवं किन्तु महानयम् । अनाद्यक्षररूपोऽस्ति मत्सामर्थ्यसमन्वितः ॥ २१७ ॥ अतोऽस्य नागरैर्भावैर्बाधो नैव भवेदिति । मयायां वर्तमानस्य निर्लेपत्वं सदाऽस्य च ॥ २१८ ॥ इत्येवं निष्कुलानन्दस्वामी

---

हमारे लिये ही यहाँ प्रकट हुए हैं, ऐसी श्रीमुखकी वाणी सुनकर मुक्तानन्दस्वामी प्रसन्न हुए, और गोपालानन्द-स्वामीको पहले बैठनेको आसन नहीं देते थे मगर अबसे गोपालानन्दस्वामी जब आपके पास दर्शनको आवे तब आसन देने लग गये ॥ ✻ ॥ एकबार गोपालानन्दस्वामी बड़ौदेसे कारियाणी गाँव जाके श्रीहरिसे मिले, तब कमरामें दोनों बातें करने लगे कि—'हम जिस हेतुसे इस लोकमें आये हैं' इत्यादि । इस बातको निष्कुलानन्दस्वामीने प्रत्यक्ष सुना था, निष्कुलानन्दस्वामीने यह भी कहा था कि—शहरसे आ रहे हैं वे क्या सुखी होंगे !, इस हास्यके प्रत्युत्तरमें श्रीहरिने कहा था कि—ये तो अनादि अक्षरस्वरूप महामुक्त हैं, इनका सामर्थ्य हमारे समान है, इसलिये उन्हें शहर पराभव नहीं कर

श्रुत्वाऽऽह चाद्य मे। सत्यवार्ता समज्ञाता यथार्थाऽवगतेति वै ॥ २१९॥ एकदा तु सभायां संस्थिता आसन् हि साधवः। मुक्तानन्दमुनिर्नित्यानन्दस्वामी तथा मुनिः ॥ २२० ॥ निष्कुला-नन्दनामा च शुकानन्दमुनिस्तथा। सिद्धानन्दमुनिश्चाऽप्युत्तमो राजाऽथ ठक्करः ॥ २२१ ॥ हरजिच्चेति वै चान्ये येषामग्रे तु वार्तिका। कृता श्रीहरिणा—'चायं गोपालानन्दयोगिराट् ॥२२२॥ अभिप्रायं रहस्यं मे यथार्थं वेत्ति सर्वथा। अतोऽस्य वचने सर्वैर्भाव्यं विश्वासशालिभिः ॥ २२३ ॥ तदुक्ता च समज्ञप्तिर्बोधो वा मम गोचरः। दृढीकार्यो यथोक्तो वै यतो ज्ञप्तौ क्षतिर्यदि ॥ २२४ ॥ तिष्ठेच्चेत् सा निवार्या न भवेत् केनापि सर्वथा। अन्या क्षतिर्विनश्येत्तु बोधहानिर्न नश्यति ॥ २२५ ॥ एवंविधोऽस्य महिमा हरिणा बहुधोदितः अनेकेषां सतां चाग्रे तथैव गृहमेधि-नाम् ॥ २२६ ॥ ⁂ ॥ यदा श्रीहरिणा त्वस्माल्लोकादिच्छा प्रद-र्शिता। अन्तर्धानपरा तत्र तदा स्वकार्यवाहिणे ॥ २२७ ॥ गोपा-लानन्दमुनये सत्संगोऽशेषतोऽर्पितः आचार्यौ साधवः सर्वे पार्षदा

---

सकता, ये तो मायामें रहते हुए भी निर्लेप रहनेको समर्थ हैं। तब निष्कुलानन्दस्वामीने कहा—सच्चा बात तो आज समझमें आयी एकबार श्रीजीमहाराजने मुक्तानन्दस्वामी नित्यानन्दस्वामी निष्कुलानन्दस्वामी शुकानन्दस्वामी सिद्धानन्दस्वामी उत्तमराजा तथा हरजीठक्कर आदिको यह कहा था कि—हमारा रहस्य अभि-प्राय यथार्थ ही गोपालानन्दस्वामी जानते हैं अतः इनके वचनमें विश्वास रखकर उनके कथनानुसार समझ दृढ़ करियेगा, क्योंकि अन्य क्षतियाँ दूर हो सकती है मगर समझमें जो क्षति, वह पीछे दूर होगी नहीं, इस प्रकार श्रीहरिने कई सन्त हरिभक्तोंसे स्वामी-श्रीकी महिमा कही है ॥ ⁂ ॥ श्रीजीमहाराजने इस लोकसे अन्तर्धान होनेकी इच्छा किया, तब अपने कार्यभार उठा लेवे

ब्रह्मचारिणः ॥ २२८ ॥ हरेर्भक्ताः समस्ताश्च वर्तन्तां चास्य सर्वथा । आज्ञायामिति धार्मिवैं मुहुः सर्वान्न्यवेदयत् ॥ २२९ ॥ अपारं महिमानं च सामर्थ्यं चाऽप्यवर्णयत् । एवं श्रीहरिणा नैजे प्रयाणे शाश्वतेऽपि च ॥ २३० ॥ वत्सरे रससिद्ध्यष्टभू (१८८६) मिते वैक्रमे शुभे । ज्येष्ठे शुक्ले दशम्यां मंगले प्रातः समीरितम् ॥ २३१ ॥ वचनं सुप्रसन्नेन प्राक् देहोत्सवतो यथा । गोपालयोगिराट् ! साधो ! वासरूपो भवान् मम ॥ २३२ ॥ वर्ततेऽतो मनसा यद् यदिष्टं कल्पयिष्यति । तत्तत् सर्वं यथेष्टं संसिद्धं सम्यग् भविष्यति ॥ २३३ ॥ अहं साकं च भवता सदा तिष्ठामि वै ततः । स्मरिष्यति यदा द्राक् तत्तदा दास्ये स्वदर्शनम् ॥ २३४ ॥ एवं हरिः प्रतिश्रुत्य स्वधाम परमं ययौ । अन्तर्धानोत्तरं स्वामी प्रातिनैध्ये हरेः स्थितः ॥ २३५ ॥ सत्संगसमुदायस्य मर्यादा विविधा व्यधात् । प्राबोधयद्धरेः सर्वोपरित्वमुपदेशनैः ॥ २३६ ॥ श्रीहरे-

---

वैसे अक्षरस्वरूप श्रीस्वामीजीको दोनों आचार्यसहित समग्र सत्संग सपुर्द किया, और आचार्य सन्त ब्रह्मचारी पार्षद इन सभीको बुलाबुलाके स्वामीश्रीकी आज्ञामें रहनेको बार-बार कहा गया था, तथा श्रीमुखसे स्वामीश्रीकी अपार महिमा तथा सामर्थ्य वर्णित किया था, आखिर भी संवत् १८८६ के ज्येष्ठशुक्ल दशमी और मंगलवारके सुबह में देहोत्सव किया तब भी श्रीहरिने स्वयं प्रसन्न होके स्वामीश्रीको वचन दिया कि—आप अक्षरस्वरूप महामुक्त मेरी कृपासे जो-जो धारिएगा वह सभी आपके संकल्पानुसार सिद्ध होगा, तथा हम सम्प्रदाय के लिये आपके साथ ही रहे हैं अतः आप जब याद करेंगे तब तुरन्त आपको दर्शन देयँगे, ऐसा कहकर श्रीहरि स्वधाम पधार गये थे, श्रीहरिके स्वधाम पधारने पर स्वामीश्रीने श्रीहरिके प्रतिनिधिरूपसे सत्संग की मर्यादाएँ बाँधी थी, श्रीहरिका सर्वोपरिपना

र्दिव्यवचनामृतस्थानि च यानि वै। रहस्यानि महासद्गुरुभिर्ज्ञातानि नैव हि ॥ २३७ ॥ तानि सर्वाणि संपृष्ट्वा श्रीहरिं च ततो जनान्। प्राबोधयत् समस्तानीत्येवं विज्ञायते स्फुटम् ॥ २३८ ॥ वार्ताभिस्तस्य चैताभिर्वचनैर्दिव्यताऽन्वितैः ॥ ३° ॥ गुणसिद्धयष्टभू ( १८८३ ) माने वर्षे श्रीहरिणा यदा ॥ २३९ ॥ जीर्णदुर्गस्य वै धिष्ण्यं पदं सत्ताधिकारवत्। प्रदातुं निश्चितं श्रीमन्मूलायाऽक्षरमूर्तये ॥ २४० ॥ सद्गुरुश्रीगुणातीतानन्दाख्यस्वामिने तदा। कण्ठे हारार्पणस्यैव समये प्राह सद्गुरुः ॥ २४१ ॥ गुणातीतमुनिश्चेददं— 'गोपालानन्दयोगिराट्। स्वीकुर्यात् प्रतिवर्षं चेज्जीर्णदुर्गे निवासनम् ॥ २४२ ॥ एकमासं तदा चाऽहं स्वीकुर्वे धिष्ण्यमालिकाम्। गोपालानन्दमुनिराट् स्वीचक्रे तद्वचस्तदा ॥ २४३ ॥ ओमित्येवं ततो हारं स्वामी कण्ठेऽप्यधारयत्। तत आरभ्य योगेशो गोपालानन्दयोगिराट् ॥ २४४ ॥ एकमासं तु वर्षे संवर्षे जीर्णपुरेऽवसत्। मण्डलेन निजेनैव सहितो हरिवाञ्छया ॥ २४५ ॥

---

समझाया था, तथा श्रीहरिके वचनामृतोंका रहस्य जो बड़े बड़े सद्गुरुओंकी समझमें भी नहीं आया था उसे आपने स्वनिवसित श्रीहरिसे पूछ पूछके स्पष्ट समझाया था, यह उनकी इन वार्ताओंसे स्पष्ट विदित हो जाता है ॥ ३° ॥ संवत् १८८३ के वर्षमें श्रीहरिने मूल अक्षरमूर्ति सद्गुरु श्रीगुणातीतानन्दस्वामीको जूनागढ़का महान्तपद देना तथा तन्निमित्त पुष्पमाला पहननेको कहा तब श्रीगुणातीतानन्दस्वामीजी बोले कि—'श्रीगोपालानन्दस्वामी प्रतिवर्ष एकमास जूनागढ़ रहनेको कबूल रखे तो मैं जूनागढ़के महान्तपदकी पुष्पमाला पहन लूँ। जब श्रीगोपालानन्दस्वामीने हा कहा तब श्रीगुणातीतानन्दस्वामी ने हार पहना, तबसे गोपालानन्दस्वामी प्रतिवर्ष एकमास जूनागढ़में स्वमण्डलसहित रहते थे, जिस वर्षमें जाना न हुआ तो दूसरे वर्षमें

यद्वर्षे न गतः स्याच्चेद् द्विमासं वत्सरे परे। वासं कृत्वा च तत्रत्ये व्यवहारेऽपि सर्वथा ॥ २४६ ॥ निभालनं यथायोग्यं चाकरोद्धितकृद्यथा । यदि क्वापि सदा वासं कर्तुं त्यागिजनः क्वचित् ॥ २४७ ॥ जीर्णदुर्गं प्रगच्छेच्चेत् तदा गोपालयोगिराट्। तस्योपरि प्रसन्नोऽति प्राभवत् स दयापरः ॥ २४८ ॥ कतींस्तु जीर्णदुर्गे चाऽप्रेषयत् साधुपार्षदान्। वर्णिनश्चोपदेशाद्यैर्गृहस्थाँश्च हरेर्जनान् ॥ २४९ ॥ [२१] ॥ समागमेन वै लोकेऽक्षररूपस्य योगिनः। गोपालानन्दमुक्तस्य त्यागिनो गृहिणो जनाः ॥ २५० ॥ नैके सुमहिमानं श्रीहरेः सर्वोपरिस्थिरम्। प्रविज्ञाय च संप्राप्ताः परमैकान्तिकस्थितिम् ॥ २५१ ॥ तेऽत्र केचित् प्रदिश्यन्ते स्मरणार्थं चमत्कराः। आदरेजपुरे सम्यक् त्वन्नकूटमहोत्सवम् ॥२५२॥ कृतः श्रीहरिणा तत्र सत्संगस्य प्ररक्षकाः। चत्वारः कुशलाः सद्गुरवोमुख्यास्तदा कृताः ॥ २५३ ॥ श्यामलीयोपनामा श्रीचैतन्यानन्दसन्मुनिः।येनेदं प्रथमं संलिखितं प्रकरणं स च ॥ २५४ ॥

---

दो मास रहते थे, तथा वहाँके व्यवहार पर विशेष ध्यान रखते थे, तथा कोई त्यागी जूनागढ़ रहने जावे तो उसपर स्वयं अति प्रसन्न होते थे, कई सन्तोंको तो आप उपदेश देके भेजते थे, तथा हरिभक्तोंको भी जूनागढ़ जानेको कहते थे ॥ [२१] ॥ अक्षरस्वरूपश्रीगोपालानन्दस्वामीके समागमसे अनेक त्यागी तथा गृहस्थ श्रीहरिकी सर्वोपरि महिमा समझके परम ऐकान्तिकपनेको प्राप्त हो गये हैं, उनमेंसे थोड़े दृष्टान्त यहाँ दिये हैं। श्रीहरिने गाँव आदरेजमें अन्नकूटका उत्सव किया, उस समय समग्र सत्संगके व्यवहारोंको संभालनेवाले चार सद्गुरुओंको मुख्य नियत किये थे, एक तो श्यामलीया चैतन्यानन्दस्वामी, जिन्होंने इस वार्ताग्रन्थका प्रथम प्रकरण लिखा है, ये अपने रहनेके लिये स्वाधीन एक कमरा रखते थे, स्वतन्त्र

स्वाऽऽवासाय पृथक् त्वेकां कुटीं स्वत्वे ररक्ष ह। पृथक् प्रकारयित्वा सद्भोज्यं च बुभुजे सदा॥ २५५॥ स्वापार्थं स्वस्य पर्यंकं ररक्षाऽपि समुत्तमम्। एतत् सर्वं सुयोग्याय तस्मै श्रीहरिणाऽपि वै॥ २५६॥ रक्षितुं संप्रदत्तं वै निषिद्धं न कदाचन। अथ पश्चात्तु वै तस्य गोपालानन्दयोगिनः॥२५७॥ समागमोऽभवन्नित्यं ततस्तेन विरागतः। ज्ञानार्जनप्रलाभाच्च सर्वो वैभव उत्तमः॥२५८॥ परित्यक्तः सतां पंक्तौ भोजनं सर्वदा कृतम्। आसने धर्मशालायां स्वापश्चापि सदा कृतः॥ २५९॥ तथा स्वाग्रे तु वै षष्टिश्चासन् श्रीपरमात्मनः रंगाद्युत्थानि चरणारविन्दानि च तान्यपि॥ २६०॥ गोपालानन्दमुनयेऽर्पितान्येव मुदा तदा। यथेष्टं विनियोगार्थं प्रोक्तं तेषां ततो मुनिः॥ २६१॥ गोपालयोगिराट् योग्यं विभागं प्रचकार ह। साधुभ्यः प्रददौ पश्चाच्छेषाणि मन्दिरे शुभे॥ २६२॥ गोपीनाथाऽऽलये दर्शनार्थं तानि ररक्ष च। चैतन्यानन्दमुनिराट् स्वयं प्राह ततः खलु॥२६३॥ यदि मे नाऽभवत् स्वामिगोपालानन्दयोगिनः। समागमस्तदाऽहं स्यामपक्वो मृत एव हि॥ २६४॥ २२॥ सद्गुरुः

---

रसोई करवाके जिमते थे और सोनेके लिये अच्छा पलंग रखते थे, ये सब श्रीहरिने योग्यतानुसार रखने दिये थे, इन्हें पीछेसे श्रीगोपालानन्दस्वामीका समागम हुआ, इस प्रतापसे वह सब वैभव तज दिया गया, पंक्तिमें जिमना तथा धर्मशालामें आसन रखना और सोना,—इत्यादि सादाई कर लिया, तथा अपने पास साठ जोटा श्रीहरिके चरणारविन्द थे, ये श्रीगोपालानन्दस्वामीको दे दिये, तथा यथेष्ट व्यवस्था करनेको कहा, स्वामीश्रीने उनमेंसे योग्य विभाग करके सन्तोंको दिया, बाकी गढपुरमें श्रीगोपीनाथजीको भेट दिया, ये चैतन्यानन्दस्वामी कहते थे कि—यदि मुझे श्रीगोपालानन्दस्वामीका समागम न भया होता तो मैं कच्चा ही कच्चा मर जाता॥२२॥

सुमहान् सर्वनिवासानन्दसाधुराट् । आसीच्छ्रीनगरस्याऽधिकारी धिष्ण्याधिपः स च ॥ २६५ ॥ श्रीग्रामरथवान् स्मृद्धियुक्तश्चापि समस्तकम् । समर्प्याऽऽचार्यवर्यायाऽयोध्याप्रसादनामिने ॥ २६६ ॥ साधुद्वयं च संनीत्वा सह वृत्तालयं ययौ । कर्तुं समागमं श्रीमद्गोपालानन्दयोगिनः ॥ २६७ ॥ तस्थौ च सर्वकालाय गोपालानन्दसन्मुनेः । शिष्यस्य पुरुषानन्दस्वामिनोऽग्रे तदाज्ञया ॥ २६८ ॥ सदातस्यानुवृत्तिं संपालयामास सर्वथा । सद्गुरुश्रीगुणातीतानन्दस्वामिवरस्तथा ॥ २६९ ॥ सुधासिन्धोः शुभाचार्यनिभः शुकमुनिः स्वयम् । उभौ तौ प्राहतुश्चाप्यावाभ्यां श्रीहरितः खलु ॥ २७० ॥ आकर्णितानि वचनामृतानि लिखितानि च । तथापि चार्थतो नैषां ज्ञातं पूर्णं रहस्यकम् ॥ २७१ ॥ ज्ञातं सर्वं रहस्यं तु गोपालानन्दयोगिनः । समागमेन सम्पूर्णं त्विदानीं तु नवो नवः ॥ २७२ ॥ स्वादस्तेषां लभ्यते वर्तते शान्तिः सुखं हृदि । अतः प्राहः गुणाती-

---

श्रीनगरके महान्त सद्गुरु श्रीसर्वनिवासानन्दस्वामी महान्तपद व सद्गुरुपदका त्याग करके आचार्यश्रीअयोध्याप्रसादजीमहाराजको अपनी गाड़ी व पूजा आदि सपुर्द करके दो सन्तको संग लेके श्रीगोपालानन्दस्वामीका समागम करनेके लिये वड़तालमें आके रहे थे, और स्वामीश्रीके शिष्य पुरुषानन्दस्वामीकी आज्ञाके अनुसार वर्तते थे। सद्गुरु श्रीगुणातीतानन्दस्वामी तथा वचनामृतोंके आचार्यतुल्य शुकानन्दस्वामी भी कहते थे कि—हमने श्रीजीमहाराजसे वचनामृत सुन सुनके लिख लिया, किन्तु उसका रहस्यार्थ समझनेमें नहीं आया था, सो रहस्यार्थ श्रीगोपालानन्दस्वामीके समागमसे समझनेमें आया, अब तो उनका नया नया स्वाद आ रहा है तथा हृदयमें सुख शान्ति वर्तते हैं, श्रीगुणातीतानन्दस्वामी भी अनेकबार कहते थे कि—मुझको गोपालानन्दस्वामीसे अधिक नहीं कहना, जैसे हीरासे हीरा वेधा जाता है

तानन्दस्वामी मुहुर्मुहुः ॥ २७३ ॥ नाऽहं गोपालमुनितो वर्णनीयो विशेषतः। वेध्यते हीरको यद्वद्धीरकेन यथा तथा ॥ २७४ ॥ सद्भिः श्रेष्ठैर्हि महिमा ज्ञायते महतां सताम् ॥ [२३] ॥ अथाऽक्षर-स्वरूपेण ब्रह्मानन्दाख्ययोगिना ॥ २७५ ॥ मूलीपुर्यां कृतं श्रेष्ठं मन्दिरं पूर्णमित्यतः। निश्चितो दिवसो देवप्रतिष्ठार्थं ततो द्रुतम् ॥ २७६ ॥ महानुभावानन्दाख्यस्तद्रूपानन्द इत्यपि । प्रेषितौ दुर्गनगरं समानेतुं तु योगिनम् ॥ २७७ ॥ गोपालानन्दसंज्ञं वै गत्वा ताभ्यां प्रवर्णितः। वृत्तान्तश्चापि सन्देशो ब्रह्मानन्दमुनीरितः ॥ २७८ ॥ प्रत्युत्तरं तदा प्राह गोपालानन्दयोगिराट्। धोलकान-गरे देवप्रतिष्ठार्थं हि देशिकः ॥ २७९ ॥ रघुवीरमहाराजश्चागतो-ऽस्ति च तेन वै । अहं चामन्त्रितस्तत्र गन्तव्यं मम चास्त्यतः ॥ २८० ॥ भवद्भ्यां कथनीयो वै ब्रह्मानन्दमुनिर्यथा । ब्रह्मानन्दमुने ! श्रीजीमहाराजस्य वै भवान् ॥ २८१ ॥ वर्तते स्नेहपात्रं च वत्सलश्चातिमानितः । देवानां सुप्रतिष्ठां

---

वैसे महान् सन्त ही महान् सन्तकी महिमा अवगत कर सकते हैं ॥ [२३] ॥ अक्षरस्वरूप ब्रह्मानन्दस्वामीने मूलीनगरमें मंदिर तैयार करके उसमें देवोंकी प्रतिष्ठाका दिन निश्चित करके गढ-पुरमें विराजित श्रीगोपालानन्दस्वामीको ले आनेके लिये महानु-भावानन्दस्वामी और तद्रूपानन्दस्वामीको भेजे थे, इन्होंने गढ़पुर जाके ब्रह्मानन्दस्वामी कथित सन्देश कहा, तब स्वामीजीने कहा धोलेरानगरमें देवप्रतिष्ठा करने के लिये आम न्त्रण आया है, अतः वहाँ जाना आवश्यक होने से मूली नहीं आ सकेंगे, और आप ब्रह्मानन्दमुनि श्रीजीमहाराज के अतिवत्सल है अतः आपही प्रतिष्ठा कर लिजिएगा, ऐसा कहना । दोनो सन्तोने मूली जाके उक्त सन्देश कहा, उसे सुनकर तुरन्त ब्रह्मानन्दस्वामी रथ सज्ज करके अच्छे अच्छे बैलोंको जोतते

संकरोत्वेव विधानतः ॥ २८२ ॥ इत्येवं तौ समाज्ञप्तौ गत्वा मूलीं कवीश्वरम् । ब्रह्मानन्दमुनिं सर्वं प्राहतुश्चततो द्रुतम् ॥ २८३ ॥ ब्रह्मानन्दमुनिः स्वस्य रथं नद्धं विधाय च । वृषाभ्यां योजयित्वा च निषद्य प्रययौ पुरात् ॥ २८४ ॥ मार्गे वृषाणां परिवर्तनं च, भक्तार्पितानां विदधन् जगाम । रात्र्येकयैव दुर्गपुरं प्रपेदे, गन्तुं प्रतुष्टाव मुनिं स मूलीम् ॥ २८५ ॥ गोपालयोगी तु जगाद पूर्ववत्, कवीश्वरः प्राह मुनिं सुधैर्ययुक् । गन्तव्यमेवाऽस्ति सुनिश्चितं यदि, धौलेयपुर्यां सुखतः प्रयाहि वै ॥ २८६ ॥ अहं मुहूर्तं परिवर्तयामि, यदा भवाँस्तत्र समागतः स्यात् । तदा प्रतिष्ठाऽपि भविष्यतीति, हरिः पुरा प्राह तु मे समक्षम् ॥ २८७ ॥ अयं हि गोपालमुनीश्वरः स्वयं, मदीयधिष्ण्याधिपवन्मतो मम । अतस्त्वहं तत्र सदा स्थितोऽस्मि हि, वचो हरेस्तत्त्वनिशं स्मराम्यतः ॥ २८८ ॥ उपस्थितौ तत्र गुरोः प्रभोस्तत्र, भविष्यति प्रातिसुतोषणं सुखम् । हरेर्यथा स्यात् सुसुखं त्वुपस्थितौ, तथैव सर्वं सुखकृद्भवेदिति ॥ २८९ ॥ धौलेयस्य मुहूर्तं तु दिवसद्वयमेव यत् । दूरे मूलीमुहूर्तात्तु वर्ततेऽतः कृपां कुरु ॥ २९० ॥ मूल्यां कृत्वा प्रतिष्ठां च धौलेये त्वेकशर्वरीं । गन्तुं चापेक्षते तत्र प्रापयिष्ये

---

बदलाते हुए जल्दीही एकरात्रिमें गढपुर आये, और स्वामीजीसे मूली पधारनेको कहने पर स्वामीजीने कहा—धोलेरा जानेका है अतः नहीं आ सकेंगे, तब ब्रह्मानन्दस्वामीने कहा—आपको धोलेरा नगर पधारना हो तो जरूर पधारिए, मैं प्रतिष्ठाका मुहूर्त बदल दूँगा, जब आप आयँगे तभी देवप्रतिष्ठा करेंगे, कारण कि श्रीजीमहाराजने मुझ समक्ष कहाथा कि—ये गोपालानन्दस्वामी आजसे मेरे स्थानापन्न हैं तथा हम उनमें सदा सम्पूर्ण रहे हैं। अतः स्वामिन्! आपके आनेसे स्वयं श्रीजीमहाराज के आनेके समान सन्तोष शान्ति होगा, और धोलेराका मुहूर्त दो दिन पीछे

रथेन यत् ।। २९१ ।। एकरात्र्यां द्रुतं, चिन्तां तां त्यक्त्वा मे सुखं कुरु। आयाहि मूलिकापूर्यां प्रार्थयामि पुनः पुनः ।। २९२ ।। श्रुत्वैवं स्नेहवाक्यानि गोपालानन्दयोगिराट् । प्रययौ मूलिकां दैवीं प्रतिष्ठां संविधाय च ।। २९३ ।। धौलेयनगरं प्रायात् सद्रथेन निशोत्तरम् । एवं तु महिमानं संविद्युर्वै महतां सताम् ।। २९४ ।। सन्तः प्रत्यक्षकर्तारो महान्तो नाऽपरे जनाः । अज्ञा नैव प्रजानन्ति दिव्यानां दिव्यतां क्वचित् ।। २९५ ।। २४ ।। एकदाऽक्षररूपः श्रीगोपालानन्दयोगिराट् । प्रोक्तः सारंगनगराऽऽवासिना क्षत्रियेण वै ।। २९६ ।। व्याघ्रजिता तु हे स्वामिन् ! मम ग्रामे मुहुः सताम् । आगमो विगमश्चापि बहुधा वर्तते ततः ।। २९७ ।। किञ्च तीर्थार्थियात्रालुश्रीधार्मिभक्तिशालिनाम् । जनानां हरिभक्तानां यात्रामार्गे पुरं मम ।। २९८ ।। स्थितं संवर्तते तेन यात्रालूनां सदाऽऽगमः । बहुशो वर्तते तेषां सत्कारे व्यययोग्यपि ।। २९९ ।। धनं चान्नं न मे पूर्णं प्रत्यहं संभवत्यपि । अतः सेवाकरीशक्तिवृद्ध्यर्थं मे कृपां कुरु ।। ३०० ।। श्रुत्वा स्वामी च तं प्राह—ददाम्येकं प्रतापिनम् । आहर्तारं चमत्कारैर्धनस्मृद्ध्यादिसम्पदाम् ।। ३०१ ।। प्रदातारं

---

हैं अतः मूलीमें प्रतिष्ठा करके तुरन्त एकरात्रिमें धोलेरा पहुँचानेकी व्यवस्था करादूँगा, अतः आप आईए, तब स्वामीजीने मूली जाके देवप्रतिष्ठा करके तुरन्त धोलेरामें हाजरी दिया था, इस प्रकार बडेकी महिमा देखने सुनने वाले बडे ही जान सकते हैं ।। २४ ।। एकबार अक्षरस्वरूप श्रीगोपालानन्दस्वामीसे सारंगपुरके दरबारमें वाघाखाचरने कहा—स्वामिन् ! हमारे गाँवमें सन्तोंका आना जाना बहुत होता है तथा तीर्थोंके मार्गका गाँव होनेसे तीर्थवासी हरिभक्तोंका भी आगमन बहुतसा रहता है, उनके लिये खर्चा पूरा नहीं पड़ता, अतः कुछ दया कीजिए तो अच्छा। यह सुनकर स्वामीश्रीने कहा—आपके यहाँ एक

सुखानां च कष्टानां नाशकं तथा । भीतीनां चापि हर्तारं रक्षाकर्तारमित्यपि ॥ ३०२ ॥ स सर्वं व्ययमात्रं सम्पूरयिष्यति सर्वथा । धनाऽऽयेन महासमृद्ध्यादिभिः कष्टं हरिष्यति ॥ ३०३ ॥ एवमुक्त्वा ततश्चाज्ञां चक्रे वायुसुतस्य वै । हनूमतः सुरम्यां सुप्रतिमां कर्तुमुत्तमाम् ॥ ३०४ ॥ ययौ स्वामी भ्रमणार्थं देशेष्विति ततः पुनः । भ्रमित्वा चाऽऽययौ यावत्तावत् सा प्रतिमा शुभा ॥ ३०५ ॥ सुसम्पन्नाऽभवद् रम्या नेत्राद्याकर्षिणी ततः । मुहूर्ते निश्चिते शुक्लाष्टम्यामाश्विनमासि वै ॥ ३०६ ॥ वैक्रमे च रसव्योमनिधिक्ष्मा ( १९०६ ) प्रमितेऽब्दके । वायुपुत्रस्य वै त्वारार्त्रिकं कर्तुं सुनैष्ठिकम् ॥ ३०७ ॥ शुकानन्दं च गोविन्दानन्दं स्वामी व्यजिज्ञपत् । ताभ्यामारार्त्रिकं सम्पादितं यत्र क्षणे तदा ॥ ३०८ ॥ हनूमन्नेत्रयोर्दृष्टिं नैजां स्वामी युयोज च । यष्टिकाधारमालम्ब्य तस्थौ स्वामी हि सम्मुखम् ॥ ३०९ ॥ क्षणे तस्मिन् वायुपुत्रप्रतिमा थर्थरेति वै । अकम्पत तदाऽन्ये ये दर्शनार्थिजनास्तु ते ॥ ३१० ॥ प्राहुः स्वामिन् ! विशेषेणैश्वर्यं मा सम्प्रयोजय । विशेषैश्वर्य-

---

कमाऊ देव पधरा दूँ, वह सब खर्च उठा लेंगे । ऐसा कहकर एक हनुमानजीकी प्रतिमा तैयार करवाना शुरू किया, और आप देशोंमें भ्रमणार्थ जाके वापस आये, संवत् १९०६ के आश्विन शुक्ल अष्टमीके दिन तैयार हुई प्रतिमाकी प्रतिष्ठाका मुहूर्त निश्चित किया, आरती उतारनेके लिये नैष्ठिकव्रतवाले शुकानन्दस्वामीको तथा गोविन्दानन्दस्वामीको आज्ञा किया, वे दोनों हनुमानजीकी आरती उतारने लगे, स्वामीश्रीने हनुमानजीके नेत्रोंपर निजदृष्टि स्थिर किया, और छडीके आधार पर खडे रहे थे, उस समय हनुमानजीकी प्रतिमा थर्थर काँपने लगी, यह देखके त्यागी सन्त कहने लगे—स्वामिन् ! श्रीगोपीनाथजी गढपुरमें तथा श्रीमदनमोहनजी धोलेरामें नजदीक हैं

सन्धाने सन्निधौ संस्थितस्य तु ॥ ३११ ॥ गोपीनाथस्य मदन-मोहनस्य च मन्दिरे । कोऽपि यायान्न वै तस्मादैश्वर्यं त्वलमेव यत् ॥ ३१२ ॥ श्रुत्वैवं तु द्रुतं स्वामी दृष्टिं देवान्न्यवर्तयत् । एवं दत्तप्रतापोऽस्य वायुपुत्रस्य भूतले ॥ ३१३ ॥ कष्टभंजनदेवस्याऽद्यापि विख्यायते त्वति । एवं स्वामिप्रतापेन दृष्ट्या च प्रतिमा त्वपि ॥ ३१४ ॥ प्रतापाढ्या भवेत्तर्हि चेतना देहिनः कथम् । न स्युः प्रतापिनः ? स्युर्वै तत्समागमकारिणः ॥ ३१५ ॥ २५ ॥ अत्रैकं सुचमत्कारं वर्णयामि विशेषतः । साधुः केशवदासाख्यो जैनः पूर्वाश्रमे वणिक् ॥ ३१६ ॥ अभवत् स पराभूतोऽनेकभूतैः प्रवेशितः । भूतोपद्रवनाशार्थं चक्रे यत्नाननेकशः ॥ ॥ ३१७ ॥ गत्वा देवालयाँस्तीर्थस्थानानि विविधानि च । धनव्ययं च बहुलं चक्रेऽपि न ललाभ शम् ॥ ३१८ ॥ भूतोपद्रवशान्तिर्न जाता पश्चाद् वणिक् स च । श्रीहरेर्धामगमनोत्तरं वृत्तालये पुरे ॥ ३१९ ॥ आययौ सविधे श्रीमद्गोपालानन्दयोगिनः । स्वामिनं तु प्रसंवीक्ष्य भूतान्याक्रोशमुल्बणम् ॥ ३२० ॥ संचक्रुः स्वामिना

---

वहाँ कोई नहीं जायँगे, अतः इतना ऐश्वर्य बस करिए, यह सुनके स्वामीजीने निजदृष्टि वापस लौटाली, हनुमानजीका वह प्रताप देशविदेशमें जाहेर है, वैसी स्वामीजीकी दृष्टिसे प्रतिमाभी प्रतापवाली हो जाय तो समागम करनेवाले चेतन देहधारी प्रतापी हो जायँ इसमें क्या आश्चर्य ? ॥ २५ ॥ यहाँ एक अद्भुत दृष्टान्त सद्गुरुके मुखसे सुना हुआ देते हैं—साधु केशवदासजी पूर्वाश्रममें जैन बनिये थे, उसको कई भूतोंने झपेटा था, इनको निकालनेके लिये इसने कई उपाय किये, कई देवस्थान और तीर्थोंमें जा जाके द्रव्यका व्यय कर डाला मगर पीडा मिटा नहीं, तब श्रीहरिके अन्तर्धानके बाद वह बनिया वडतालमें श्रीगोपालानन्दस्वामीके पास आया, स्वामीश्रीके दर्शन करते ही वे भूत

तानि स्वाज्ञया बदरीवनम् । प्रेषितानि ततः श्रेष्ठी प्रतापं वीक्ष्य योगिनः ॥ ३२१ ॥ लब्ध्वा जीवनदानं च मत्वा श्रेष्ठामुपाकृतिम् । स्वामिनः शरणं लब्ध्वा स्नेहं कृत्वाऽऽश्रितोऽभवत् ॥ ३२२ ॥ वर्तमानमहामन्त्रं लब्ध्वा च तुलसीस्रजम् । कण्ठे धृत्वाऽभवत्तूर्णं सत्संगी च गृहं ययौ ॥ ३२३ ॥ अथ कालान्तरे योगाऽभावात् कण्ठी न वै स्थिता । किन्तु कार्यवशाच्छ्रेष्ठी गच्छन् ग्रामान्तरं पथि ॥ ३२४ ॥ वृत्तालयस्य निकटे निर्गच्छन् स्वगुरुं तदा । सस्मार च ययौ वृत्तालये दर्शनवाञ्छया ॥ ३२५ ॥ किन्तु स्वामी तदा नाऽऽसीद् यतोऽक्षरगतोऽभवत् । वणिक् पप्रच्छ वै भक्तं त्वेकं स्वामी क वर्तते ॥ ३२६ ॥ भक्तः प्राह ययौ धाम स्वामी देहं विहाय वै । श्रुत्वा श्रेष्ठी महाऽऽघातं हृदये प्राप मूर्छितः ॥ ३२७ ॥ पपात भूतले पश्चान्मूर्छाया विगमे पुनः । साधूनां धर्मशालायां स्वामिनस्त्वासने ययौ ॥ ३२८ ॥ तत्राऽप्येवं गतो मूर्छां पपात पृथिवीतले । विरहस्य महादुःखं न सेहेऽपि तु तस्य वै ॥ ३२९ ॥ तत्क्षणे मुक्तसद्वृन्दं स्वामी श्रीहरिरित्यपि । अदृश्यन्त

---

चिल्लाने लग गये, उन्हें स्वामीश्रीने अपनी आज्ञासे बदरिकाश्रममें भेज दिये, इस प्रतापको देखके तथा जीवनदान प्राप्त करके उस वणिकको स्वामीश्रीसे बहुत स्नेह हुआ जिससे वर्तमान (शरण मन्त्र) लेकर कंठी धारण किया मगर सत्संगके योगके अभावके कारण उसका सत्संग व कंठी रहा नहीं, कोईबार वह शेठ कार्यवशात् कहीं जा रहे थे उसका मार्ग वडतालके नजदीक निकला, तब गुरुदेवका स्मरण हो आया और वडतालमें गुरुजीके दर्शनार्थ गया, मगर स्वामीश्री स्वधाम पधार गये थे, शेठने दरवाजामें एक भक्तसे पूछा—गोपालानन्दस्वामी कहाँ हैं ? । भक्तने कहा—वे तो अक्षरधाम पधार गये हैं, यह सुनते शेठके हृदयमें बड़ा आघात लगा, मूर्छावश होकर वहीं गिर गये, थोड़ा

ततः कालात् समाधिस्थितिमाप्तवान् ॥ ३३० ॥ यदा यदा स स्मरति स्वामिनं च तदा तदा । समाधिं लभते चैवं सदा तादृक्स्थितिस्त्वभूत् ॥३३१॥ पश्चाच्छ्रेष्ठी गृहं त्यक्त्वा साधुदीक्षां समग्रहीत् । नाम्ना केशवदासेति समाधिस्थितिमाँस्त्वभूत् ॥ ३३२ ॥ हस्ताञ्जलिं प्रबद्ध्वैव स्थितो यर्हि समाधिगः । भवत्येव तदा हस्तांजलौ वस्तु प्रसादजम् ॥ ३३३ ॥ संपूर्णं पूरितं तत्र दृश्यते दिव्यमुत्तमम् । अलौकिकं प्रभासेत वीक्षकाणां हि नूतनम् ॥ ३३४ ॥ लवंगानि समार्द्राणि दीर्घाणि द्व्यंगुलान्यपि । दृश्यन्ते चांऽजलौ चैला महती क्षारिकासमा ॥ ३३५ ॥ स्थलपद्मानि सुरभिवारिपद्मनिभानि च । शर्करा दिव्यरूपा च सुधामिष्टरसान्विता ॥३३६॥ इत्येवं वीक्ष्य सामर्थ्यं स्मरणात् स्वामिनस्ततः । अन्येऽपि बह्वो जाता मुक्तास्तेन समा इति ॥ ३३७ ॥ अतो नाऽस्य प्रतापस्येयत्तां कर्तुं वयं क्षमाः । उक्तः सर्वश्चमत्कारो रघुवीराख्य-

---

देर से उठकर धर्मशालामें स्वामीश्रीके आसन-स्थान पर आये वहाँ भी फिर मूर्छा होनेसे गिर गये, इस प्रकारकी विरहकी मूर्छामें उसको श्रीजीमहाराज तथा अनन्तमुक्तोंके दर्शन होनेवाला समाधि हो आया, पीछे तो जब-जब स्वामीश्रीको याद करे तब तब समाधि स्थिति हो जाय ऐसा कायमी हो गया, बादमें शेठ साधु हो गये, इनका नाम केशवदासजी रखा था, इनको जब जब समाधि होता था, तब तब उनको दिव्य प्रसाद अंजलिभर मिलता था, प्रसादकी चीजें अलौकिक भासती थीं, दो इंच लम्बे हरे लवंग खारिक छाहारा समान लम्बी इलायची बड़े कमल समान सुगन्धित गुलाबके पुष्प, दिव्य मिसरी आदि दिव्य आते थे। ऐसे अनन्त चमत्कारी पुरुष जिन स्वामीश्रीके प्रतापसे हुए ऐसे प्रतापोंकी भी गिननी नहीं हो सकती, यह अलौकिक चमत्कार श्रीरघुवीरजी महाराजने सत्संगिजीवनका

देशिकः ॥३३८॥ सत्संगिजीवनग्रन्थपारायणमकारयत्। यदा तदाऽभवत् सर्वदृश्यो दिव्यो ह्यलौकिकः ॥ ३३९ ॥ [२६] ॥ वटपत्तनराज्यस्य पण्डितप्रवरो महान्। बदरीनाथशास्त्रीति सत्संगे ख्यातिमानभूत् ॥ ३४० ॥ तत्पुत्राः शास्त्रिणः सन्ति सत्संगे वृत्तितत्पराः। बदरीनाथविदुषः पिता सर्वगुणालयः ॥ ३४१ ॥ अभूत् त्र्यम्बकनाथाख्यो वृद्धः सत्यपरायणः। मुहुः प्राह पुरा सोऽपि–'नाऽहं वै दृष्टवान् दृशा ॥ ३४२ ॥ स्वामिनारायणं किन्तु दृष्टवानस्मि योगिगिनम्। हरेः साधुं तु गोपालानन्दाख्यं सुप्रतापिनम् ॥ ३४३ ॥ दृष्ट्वाऽनुभूय वच्म्यत्र–गोपालानन्दयोगिराट्। अभवद् भगवान् सत्यं यच्छिष्या ईदृशास्तदा ॥३४४॥ तद्गुरुर्भगवान् साक्षाद् भवत्येव कथं नहि?। किमत्राऽऽश्चर्यमस्त्येति विद्वांसोऽप्यवदँस्तथा—' ॥ ३४५ ॥ ये श्रीस्वामिप्रसत्संगे क्वचिल्लाभं समावहन्। तेऽपि श्रीस्वामिनं सत्यं त्वविदन् भगवानिति ॥ ३४६ ॥ एवंविधो महामुक्तोऽक्षरः स्यात् संशयोऽत्र कः। त्यागिनां च गृहस्थानां ज्ञानं स्वामिसमागमात् ॥ ३४७ ॥ प्रपक्वं परमं श्रेष्ठं श्रेष्ठोपासन-

---

पारायण करवाया तब तक चालू था ॥ [२६] ॥ बडौदाके राज्यपण्डित बदरीनाथशास्त्रीजी (डाह्याभाई) समग्र सत्संगमें प्रसिद्ध थे, अभी भी उनके पुत्र सत्संगमें रस लेते हैं, बदरीनाथशास्त्रीजीके पिताजी त्र्यंबकनाथशास्त्रीजी वृद्ध थे, वे कहते थे कि—हमनें श्रीस्वामिनारायणप्रभुको तो नहीं देखे हैं मगर उनके सन्त श्रीगोपालानन्दस्वामीजीको देखे हैं, ये ही जरूर भगवान् थे, तब ऐसे शिष्यके गुरुदेव परब्रह्म भगवान् हो इसमें क्या कहना!, इस प्रकार स्वामीजीके प्रसंगमें आये हुए समर्थ विद्वान् भी स्वामीजीको भगवान् कहते थे तो स्वामीजी परमेश्वरके निवास अक्षरस्वरूप हो इसमें क्या आश्चर्य? स्वामीश्रीके समागमसे कई त्यागी व गृहस्थोंकी समझ पक्व हुई थी, जिससे उनके

गोचरम् । जातमासीत् तथा तेषां पूर्वांगानि समागमात् ॥ ३४८ ॥ परावृत्तिं गतान्यासन् स्थितिं दिव्यां त आप्नुवन् । केषाञ्चित् त्वभवत् साक्षाद् ब्रह्मरूपस्वदर्शनम् ॥ ३४९ ॥ ब्रह्मात्मदर्शनं चाऽपि स्वस्मिन् श्रीहरिदर्शनम् । असंख्यमुक्तवीक्षा चाऽभवद्धामाऽवलोकनम् ॥ ३५० ॥ तेष्विमे सन्ति विख्याताः स्मरणात् पापनाशकाः । चैतन्यानन्दनामा च नृसिंहानन्दनामधृक् ॥ ३५१ ॥ स्वामी बालमुकुन्दानन्दोऽक्षरानन्दसाधुराट् । शुकानन्दो दयानन्दो जयानन्दश्च साधुराट् ॥ ३५२ ॥ हरिहर्यानन्दसाधुस्तापसानन्द इत्यपि । विधात्रानन्दसाधुश्च ज्ञानानन्दो महानपि ॥ ३५३ ॥ प्रज्ञानन्दस्तथा स्वामी श्रीधरानन्द इत्यपि । स्वामी सर्वनिवासानन्दश्च दिव्यदृशस्त्विमे ॥ ३५४ ॥ साधुर्विज्ञानदासश्च व्यवस्थापरवर्तनः । श्रीघनश्यामदासश्च गुर्वाज्ञापालकस्तथा ॥ ३५५ ॥ साधुः केशवदासो माधवदासश्च पण्डितः । महापुरुषदासो निर्गुणदासस्तथाऽपरे ॥ ३५६ ॥ साधवो बहवश्चापि गृहस्थाश्च तथाविधाः । उत्तमक्ष्मापतिर्भक्तो हरजिच्च तथाविधः ॥ ३५७ ॥ दामोदरो नृसिंहश्च

पूर्वके अंग बदल गये थे, कई भक्तोंको स्वामीश्रीके प्रतापसे आत्माका ब्रह्मरूप पना हुआ था, उसमें अनन्तमुक्तसहित विराजित श्रीपुरुषोत्तमनारायणके दर्शन होता था, उनके नामचैतन्यानन्दस्वामी, नृसिंहानन्दस्वामी, अक्षरानन्दस्वामी, बालमुकुन्दानन्दस्वामी, शुकानन्दस्वामी, दयानन्दस्वामी, हरिहर्यानन्दस्वामी, जयानन्दस्वामी, तपसानन्दस्वामी, विधात्रानन्दस्वामी, मोटा ज्ञानानन्दस्वामी, प्रज्ञानन्दस्वामी, श्रीधरानन्दस्वामी, सर्वनिवासानन्दस्वामी, विज्ञानदासजी, घनश्यामदासजी, केशवदासजी, शास्त्री माधवदासजी, महापुरुषदासजी, तथा निर्गुणदासजी आदि सन्त, और दादाखाचर, हरजीठकर, दामोदरभाई, नरसिंहभाई, लक्ष्मीरामभाई, आदि अनेक हरिभक्त

लक्ष्मीरामादयोऽपरे। अनेके वै हरेर्भक्ता गोपालानन्दयोगिनः ॥ ३५८ ॥ समागमेन विज्ञानं श्रीहरेः श्रेष्ठमुत्तमम्। सर्वोपरित्वबोधाढ्यं प्राप्य ते सुखिनोऽभवन् ॥ ३५९ ॥ २७ ॥ अस्माल्लोकाद्धरेरन्तर्धानाऽनन्तरमत्र वै। द्वाविंशतिप्रवर्षाणि गोपालानन्दयोगिराट् ॥ ३६० ॥ भूमौ स्थित्वाऽत्र लोकेषु सत्संगस्य प्रपोषणम्। व्यधाच्चापि तथा देवालयानां च प्रपोषणम् ॥ ३६१ ॥ देवानां देशिकानां च त्यागिनां गृहिणामपि। शास्त्राणां सम्प्रदायस्य पुष्टिवृद्धिविधायिनाम् ॥ ३६२ ॥ पोषणं च प्रचारं च विस्तारं च प्रवर्तनम्। हरेराज्ञानुसारेण यथावत् संव्यधान्मुदा ॥ ३६३ ॥ सम्प्रदायस्य मर्यादा बबन्ध बहुधा ततः। धर्मस्य नियमानां च प्रवृत्तिं प्राकरोत् तथा ॥ ३६४ ॥ श्रीहरेः सर्वथा सर्वोपरित्वं शास्त्रनिर्णयैः। प्रावर्तयन् मनुष्येषु कृत्वैवं बहुधोचितम् ॥३६५॥ वैक्रमेऽथ रसव्योमनिधिक्ष्मा ( १९०६ ) सम्मितेऽब्दके। हरेर्धाम प्रगन्तुं श्रीस्वामी वै तत्परोऽभवत् ॥ ३६६ ॥ किन्त्वाचार्यमहाराजरघुवीरप्रयाचिताम्। प्रार्थनां श्रीहरिर्ज्ञात्वाऽरक्षयद्वत्सरद्वयम् ॥ ३६७ ॥ अधिकं स्वामिनं लोके सर्वकल्याणहेतवे। सिद्धिव्योमनिधिक्ष्मा ( १९०८ ) सम्मितेऽशब्दे स ततः पुनः ॥ ३६८ ॥ वैशाखे कृष्णपञ्चम्यां गन्तुं धामोद्यतोऽभवत्। एकसप्ततिवर्षाणि

---

स्वामीश्रीके समागमसे श्रीहरिकी सर्वोपरि समझ प्राप्त करके शाश्वत सुखवाले हुए थे ॥ २७ ॥ श्रीजीमहाराज इस लोकमेंसे अन्तर्धान होनेके बाद स्वामीजीने लगभग बाईस वर्षों तक इस लोकमें रहकर सत्संगका पोषण किया, तथा देव आचार्य त्यागी गृहस्थ और शास्त्र आदिकी श्रीहरिकी आज्ञाके अनुसार प्रवृत्ति होने योग्य मर्यादा बांधा, धर्म नियम विशेष प्रवृत्त किये, और श्रीहरिका दृढ सर्वोपरिपना प्रवर्ताया, बादमें संवत् १९०६ में अक्षरधाम जानेकी तैयारी किया, किन्तु आचार्यश्रीरघुवीरजी-

त्रयो मासास्तथोत्तरम् ॥ ३६९ ॥ दिनानि द्वादशाऽऽयुष्यं भुक्त्वा त्यक्त्वा तु भौतिकम् । शरीरं च ततो दिव्यं धृत्वा रूपं तु शाश्वतम् ॥ ३७० ॥ स्वीयं पूर्वं स्वरूपं संगृह्य श्रीहरिसन्निधौ । गत्वाऽखण्डितसेवायां सदोवास हरेः प्रभोः ॥ ३७१ ॥ पुरुषोत्तमनाथस्य स्वामिनारायणस्य वै । धाम्न्यक्षरेऽक्षरात्मा श्रीस्वाम्युवास महामुनिः ॥ ३७२ ॥ २८ ॥ चमत्कारचरित्राणि गोपालानन्दसन्मुनेः । श्रीहरेरिव सर्वाणि त्वपाराणि प्रसन्ति हि ॥ ३७३ ॥ अनन्तानां चरित्राणां वर्णनं कर्तुमेव न । शक्यतेऽतो यथा येषां पक्षयोर्बलमास्थितम् ॥ ३७४ ॥ तथा ते पक्षिणो व्योम्न्युड्डयन्ते हि तथा त्विह । वैनतेयसमाः श्रीनिर्गुणदासादयोऽनघाः ॥ ३७५ ॥ दिव्याः सन्तो हरेर्भक्ता गोपालानन्दयोगिनः । अपारं महिमानं संवर्णयामासुरुत्तमम् ॥ ३७६ ॥ तल्लेशोऽत्र च संक्षिप्तो महिमा तु यथामति । यथाशक्ति यथार्थो वै वर्णितोऽस्ति ततो जनैः ॥ ३७७ ॥ सारग्राहिभिरेवाऽत्र हरेर्भक्तैश्च साधुभिः । वाचनीयस्तथा भाव्यं प्रसन्नैश्चैवमर्थ्यते ॥ ३७८ ॥ विदुषा बालकृष्णेन नैष्ठिकब्रह्मचारिणा । जीर्णदुर्गस्थितैनैव प्रबोधन्या दिने शुभे ॥ ३७९ ॥ वैक्रमे-

---

महाराजकी प्रार्थनासे श्रीहरिने स्वामीजीको दो वर्ष अधिक यहाँ रखा था, तब संवत् १९०८ के वैशाखकृष्ण पञ्चमीके दिन एकहत्तर वर्ष तीन मास और बारह दिनोंका आयुष्य पूर्ण करके भौतिक शरीरको त्यागके अपने पूर्वके अनादि दिव्यरूपमें श्रीपुरुषोत्तमनारायणकी सेवामें ब्रह्मधाममें शाश्वतस्थितिवाले हो गये ॥ २८ ॥ स्वामीश्रीके चमत्कार चरित्र श्रीहरिकी तरह अनन्तप्रकारके हैं, जो यथार्थ वर्णनमें आ सके नहीं, जैसे कि—जिसकी पंखमें जितना बल हो उतना वह आकाशमें गति कर सकता है, वैसे गरुडसमान स्वामी निर्गुणदासजी आदि सन्त हरिभक्त स्वामीश्रीकी अपार महिमा कह गये हैं, उनमेंसे

वत्सरे वेदनिधिनिध्येक (१९९४) सम्मिते। जीवनं लिखितं चेदं प्रार्थ्यते स्वामियोगिनि ॥ ३८० ॥ श्रीकृष्णवल्लभाचार्यो गोपालानन्दसन्मुनेः। जीवनं संस्कृते कृत्वा श्रीस्वामिन्यार्पयन् मुदा ॥ ३८१ ॥ २९ ॥

इतिश्रीदार्शनिकपञ्चानन-षड्दर्शनाचार्यनव्यन्यायाचार्य-सांख्य-योग-वेदान्त-मीमांसातीर्थ-सद्गुरुपण्डित-श्रीकृष्णवल्लभाचार्य-विरचितसंस्कृतगिरामयश्रीगोपालानन्द-स्वामि-जीवनवृत्तान्तनिचयः श्रीगोपालस्वरूपश्रीस्वामिचरणारविन्दयोः समर्पितोऽस्तु ॥ ३० ॥

---

यहाँ हमने यथाशक्ति यथामति संक्षेपमें लिखा है, अतः सारग्राही त्यागी गृही सब बांचकर प्रसन्न होईयेगा, इति शम् ॥ २९ ॥

इति श्री जूनागढ़निवासी नैष्ठिकब्रह्मचारी श्रीबालकृष्णानन्दजी शास्त्रीजीने संवत् १९९४ के कार्तिक प्रबोधनी एकादशी के दिन गुजरातीमें लिखा हुआ अक्षरस्वरूप सद्गुरु श्रीगोपालानन्दजीस्वामीजीका जीवन-वृत्तान्तका दार्शनिकपंचानन-षड्दर्शनाचार्य-नव्यन्यायाचार्य-सांख्ययोगवेदान्तमीमांसातीर्थ-पण्डित श्रीकृष्णवल्लभाचार्य शास्त्रीजीने हिन्दी भाषान्तर करके श्रीजीमहाराजमें अर्पण किया ॥ ३० ॥

## अक्षरस्वरूपसद्गुरुश्रीगोपालानन्दस्वामिस्तोत्रम्

यः श्रीगोपालकृष्णप्रभवगुणनिधिर्वेनुधामेशरूपो, यो वा साहस्रभोगात्मगनिरवधिसत्सर्वयोगाऽधिवासः। यन्मूर्तौ ब्रह्मधामाऽधिपकृतवसतिर्भूरिशृंगा अयासो, गावो यद्वष्मगास्तं परपुरुषतनुस्वामिवर्यं नमामि ॥ १ ॥ यो वै संगद्यते श्रीसुरभिकुलपतिर्वासुदेवाऽऽख्यमूर्तिर्भूमा यो वर्ण्यते वा जगदुपरिमहापूरुषाख्यः स वोक्तः। वेदे साहस्रशीर्षा इति च किमु महाविष्णुरुक्तोऽपि यस्तं, गोपालानन्दमीडे यतिवरमुरु हैरण्यगर्भस्तुतं वा ॥ २ ॥ योगाभ्यासं नितान्तं कलितसुनिगमादिश्रुतार्थं कृतार्थं प्रीत्यै श्रीधर्मसूनोर्विदधतमनिशं स्वामिनारायणस्य। रक्षित्वैकान्तधर्मं प्रतिहतजनताऽज्ञानसंज्ञाऽन्धकारं, गोपालानन्दसंज्ञं मुनिवरमनघं नौमि सद्वृन्दमुख्यम् ॥ ३ ॥ यन्मूर्तौ सुसरस्वती निवसति श्रीयोगविद्या परा, सांख्यज्ञानमसीमतर्ककलनाः संभूतयो ब्रह्मदाः। मुक्तिः स्मृद्धिरधीशभक्तिरधिका धर्मो हरेः शाश्वतः, साधुत्वं च सुदिव्यतेति निवसत्यस्मिन् हि तस्मै नमः ॥ ४ ॥ सम्प्रदायपदसुस्थिरकर्ता सम्प्रदायमतिबोधनधर्ता। सम्प्रदायसुनिबन्धविधाता योगिराड् जयति मुक्तिसुदाता ॥ ५ ॥ धाम धामेश्वरो यद्वा मुक्तोऽनादिस्तदात्मकः। यो वाऽऽविर्भावरूपस्तं वन्दे गोपालयोगिनम् ॥ ६ ॥ धाम्नि साध्याः सन्ति देवाः श्रीहरेः समुपासकाः। पुरुषोत्तमरूपास्तन्मुख्यसद्योगिने नमः ॥ ७ ॥ परब्रह्मप्रदा वार्ता येन प्रोक्ता कृपालुना। हरेः प्रसादपात्रं तं नौमि गोपालयोगिनम् ॥ ८ ॥

इति श्रीकृष्णवल्लभाचार्यप्रदर्शितं श्रीगोपालानन्दस्वामिस्तोत्रम् ॥